# VEDIC SELECTIONS

*Revised Edition*


EDITED BY

KSHITISH CHANDRA CHATTERJI, M.A.

*Lecturer, Calcutta University*





CALCUTTA UNIVERSITY

1944

# NOTE

The edition previous to this was prepared by a committee consisting of :—

1. Mahamahopadhyaya Sitarama Sastri, Lecturer in the Vedas, Calcutta University.

2. Pandit Bhababibhuti Bhattacharyya, Vidyabhushan, M.A., Lecturer in Sanskrit, Bangabasi College, Calcutta, and Editor of the Samaveda, Calcutta Sanskrit Series.

3. Dr. Satkari Mukherjee, M.A., Ph.D., Lecturer in Sanskrit and Philosophy, Calcutta University, now Reader and Head of the Department of Sanskrit.

4. Mr. Rasamaya Bhattacharyya, M.A., Lecturer in Sanskrit, Scottish Church College, Calcutta.

---

# ABBREVIATIONS

A —Ātmanepada
AA —Aitareya Āranyaka
AB —Aitareya Brahmana
Abl —Ablative
Acc —Accusative
acc —according
adj —adjective
A G —Alt indische Grammatik
Aor —Aorist
Āp S S —Āpastamba Srauta Sutra
Arm —Armenian
Ātm —Ātmanepada Ātmanepada
AU —Aitareya Upanisad
AV —Atharvaveda
Av —Avesta
AVS —Sāyana on AV
B I —Bibliotheca Indica
B P —Bhagavata Purana
BD —Brhaddevata
Bh —Bhanuji
B S —Brahma Sutra
BU —Brhadaranyaka Upanisad
BUS —Saṅkarācārya on Brahma Sūtra
Cf —compare
class —classical
COJ —Calcutta Oriental Journal.
comd —compound
comp —comparative
CU —Chāndogya Upanisad.
D —Durga
Dat —Dative
dec —declension
du —dual
Eng —English
f or fem —feminine.
G , Geld —Geldner
Gaθ or G Av —Gathic Avesta.
Gen —Genitive
Gk —Greek
Germ —German
Goth —Gothic
Ib —Ibid
I C —Indian Culture
I E —Indo European
IHQ —Indian Historical Quarterly
ind —indicative
Ins , Instr —Instrumental
ip or imp —imperfect
ipv or imper —imperative
JAOS —Journal of the American Oriental Society

J N V —Jaimmiya Nyayamala vistara
JUB —Jaiminiya Upanisad Brahmana
KS —Kathal a Samhita
Ksira —Ksirasvamin
KU —Kausitaki Upanisad
Lat —Latin
Lit(h) —Lithuanian
Loc —Locative
m masc —masculine
M —Max Muller s edition of the Rgveda
M M —Max Muller
Mah Nar —Maha Nārayana Upanisad
MS —Maitrayani Samhita
M S —Mimamsa S itra
MSS —Manuscripts
Mah —Mahidhara
Mbh —Mahabhasya or Maha bharata
Nir —Nirukta
n —noun
n neut —neuter
Nom —Nominative
O Bulg —Old Bulgarian
O E —Old English
Old —Oldenberg
O P —Old Persian
Opt —optative
P —Poona edition of the Rgveda
Pa —Pali
PB —Pañcavimśa Brâhma
P Par —Parasmaipada
Part —Participle
pass —passive
Pf , perf —perfect
pl —plural
Pp —Padap itha
Pr —Prakrit
pp —pages
pres —present.
P S —Phit Sutra
Ram —Ramayana
RP —Rk pratiśakhya
RV —Rgveda
s sing —singular
S —Sâyana
Ś —Saṅkaracarya
S B E—Sacred Books East Series
sb subj —subjunctive
SB —Śatapatha Brahm
Śiś —Śiśupalavadha
S K —S ddhanta kaum
Ś K —Sabdakaustubha
Sk —Skandasvamin
Sk M —Skanda Maheś
Skt —Sanskrit
Sp —Samhitapatha
St —Samhitā text
ST —Stanza
SU —Svetasvatara Up
Sira U —Atharvasira nisad

Subj —Subjunctive.
super —superlative
SV —Sāmaveda.
Svet —Svetāśvatara
syl.—syllable.
TA —Taittiriya Āranyaka
TAS —Sāyana on TA.
Ta B —Tandya Brāhmana
TB —Taittiriya Brahmana.
TS.—Taittiriya Samhitā
TSS —Sāyana on the Taittiriya Samhitā.
TU.—Taittiriya Upanisad
U.—Upanisat
UC —Uttararamacarita.
Ujj —Ujjvaladatta
V.—Vani Vilas Press edition
Ved.—Vedic.
Voc.—Vocative
V.G S —Macdonell's Vedic Grammar for Students
V.M —Venkaṭa Madhava
VP —Vajasaneyi-Prātiśākhya.
V.P —Viṣṇu Purāṇa
VS —Vajasaneyi Samhitā
Y Av —Younger Avesta.
YV.—Yajurveda
अनु°—अनुक्रमणी, सर्वानुक्रमणी।
आ° श्रौ°—आश्वलायनश्रौतसूत्रम्।
आ° गृ°—आश्वलायनगृह्यसूत्रम्।
उ°—उणादिसूत्रम्।
ऋ° स°—ऋग्वेदसंहिता।
ऐ° आ°—ऐतरेयारण्यकम्।
ऐ° ब्रा°—ऐतरेयब्राह्मणम्।
ऐ° उ°—ऐतरेयोपनिषत्।
का°—काशिका।
छा° उ° or छा°—छान्दोग्योपनिषत्।
तै° आ —तैत्तिरीयारण्यकम्।
तै° ब्रा°—तैत्तिरीयब्राह्मणम्।
तै° स°—तैत्तिरीयसंहिता।
धा°—धातुपाठ।
नि°—निरुक्तम्।
निघ°—निघण्टु।
नृ° उ°—नृसिंहोपनिषत्।
पा°—पाणिनि।
फि°—फिट्सूत्रम्।
ब्र° सू°—ब्रह्मसूत्रम्।
मा°—महाभाष्यम्।
महा° शा°—महाभारत शान्तिपर्व।
शत° ब्रा°—शतपथब्राह्मणम्।

## CONTENTS

# PREFACE

This little volume contains pieces from Vedic literature prescribed for the B A Honours Examination in Sanskrit of the Calcutta University for 1945 and subsequent years It is, however, merely a rough draft and not a finished product and as such is not immune from the imperfections inherent in such hasty work Still in the preparation of the notes the needs of the student have constantly been kept in view and a sincere attempt has been made to explain whatever may present any difficulty to the teacher or the student It is just possible that the ordinary student will find too much of comparative philology in these pages and he may skip those portions at first if he feels inclined to do so He must, however, make it a point to have by his side *Macdonell's Vedic Grammar for Students* and if possible, his *Vedic Reader* also (both published by the Oxford University Press) which are indispensable to all beginners of Vedic studies

Sākalya has always been regarded as one of the earliest interpreters of the Ṛgveda and his Padapatha, inspite of its obvious imperfections and limitations, will amply repay careful study The claim of a European scholar that he could have produced a much better Padapatha reminds one of the child on the father's shoulders claiming to be bigger than his father Much greater space has therefore been devoted to the Padapāṭha than is usual in such handbooks

Greater care has also been bestowed on the commentary of Sāyaṇa than in any previous work of this type and practically every single quotation in the commentary on the Ṛgveda portion traced to its source Different readings have been

discussed and new readings adopted in many places Copious extracts have been given from other commentaries and it has been shown in many cases that some of the explanations once thought to be the monopoly of European scholars were in fact, suggested long ago by Indian savants In the case of the Devisukta, so dear to the heart of the Hindu the Editor has composed a new commentary unfolding the peculiar beauty of each word and expression in the hymn

The English translations of many of the passages from the Rgveda quoted in the notes are taken from Griffith and of those from the Atharvaveda from Whitney The Sanskrit explanations of a few viniyoga passages in Sayana s commentary given as foot notes are from the pen of the Editor s guru Mahamahopadhyaya Pandit Sitarama Sastri of the Calcutta University The Editor takes this opportunity of expressing his indebtedness to these scholars as also to all the other Purvacaryas both Indian and foreign especially to Geldner and Macdonell whose works have been drawn upon for this volume The Editor s hand writing is the despair of compositors That the misprints are not more numerous is due to the devotion and skill of Mr Ramkrishna Chakravarti M A Proof Reader in the Calcutta University Press and a former pupil of the Editor

CALCUTTA
*23rd October 1944*

KSHITISH CHANDRA CHATTERJI

# ऋग्वेदः

## Hymn No. 1

### AGNI

1. 1

मण्डलम् १ सूक्तम् १

मधुच्छन्दा ऋषिः। अग्निर्देवता। गायत्री छन्दः।

1

ॐ अग्निमीळे पुरोहितं
यज्ञस्य देवमृत्विजम्॥
होतारं रत्नधातमम् ॥१॥

ॐ अग्निम् । ईळे । पुरःऽहितम् ।
यज्ञस्य । देवम् । ऋत्विजम् ।
होतारम् । रत्नऽधातमम् ॥१॥

I praise Agni, the household priest (high priest of the sacrifice—S ), the divine ministrant of the sacrifice, (the divine, the Hotr ministrant—S.), the Hotr and the best bestower of wealth.

सायण-भाष्यम्। 'अग्निमीळे' इति सूक्तं प्रातरनुवाके आग्नेये क्रतौ विनियुक्तम्। स विनियोग[1] आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खण्डे सूत्रितः। 'अथा नो अग्न इति षळग्निमीळेऽग्निं दूतम्' [आ° श्रौ° सू° ४।१३।७] इति। तत्र

[1] विनियोगो नाम कर्मभिः सम्बन्धः। तथा चोक्तम्—'कर्मणैव तु कर्मस्य विनियोगः प्रकीर्तितः' इति। स च द्विविधः—सामान्यतो विशेषतश्च। श्रुत्याया, सहिताया पाठातक्रमेणैव ब्रह्मयज्ञादौ विनियोग आद्यः। अन्तिमस्तु तत्तत्क्रतौ स्वकारैराश्वलायनेन प्रदर्शितः। स च त्रिविधः—सूक्तविनियोगऋगादिविनियोग एकैकस्या ऋचो विनियोगश्चेति।

हीनपादग्रहणात् सूक्तनिश्चय, 'सूक्तं[1] सूक्तादौ हीने पादे' [आ० श्रौ० १।१।१८] इति परिभाषितत्वात्। तस्मिन् सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ[2]

---

"तत्राय सूक्तविनियोगः। सोमयागे यस्मिन् दिने सोमस्य रसं निष्कास्य होमः क्रियते तस्मात् सुत्यादिनात् पूर्वस्या रात्रेरुत्तरार्धे पक्षिणामारावात् पूर्वं मन्त्रैः क्रियमाणा स्तुतिः प्रातरनुवाकः, तत्रेदं सूक्तं विनियुज्यते। प्रातरनुवाकेऽग्निरुषा अश्विनौ चेति तिस्रो देवता स्तूयन्ते। प्रतिदैवतं च गायत्र्यादिसप्तच्छन्दोयुक्ता अनेके मन्त्राः पठनीया भवन्ति। स चायं प्रतिदैवतं स्तवः क्रतुशब्देनोच्यते।" अत्र क्रत्वङ्गभूतस्य प्रातरनुवाकस्यावयवे उपचारात् क्रतुशब्दो वर्तते। 'एवञ्चाग्नेय एव आग्नेयः क्रतुः, उषस्य एव उषस्यः क्रतुः, आश्विन एव आश्विनः क्रतुरिति भवति।' एकैकस्मिन् क्रतौ प्रथमं छन्दः परिसमाप्य ततो द्वितीयं ततस्तृतीयमित्यनेन क्रमेणानुवक्तव्यम्। 'तत्राग्नेये क्रतौ गायत्रीछन्दोयुक्तमन्त्रपाठप्रसङ्गे अग्निमीळे इति सूक्तं वक्तव्यम्।' अस्य विधानोक्तं आर्त्तविनियोगादिकं परिशिष्टे प्रतिपादयिष्यते।

[1] आश्वलायनेन श्रौतसूत्रस्य प्रथमाध्यायस्य प्रथमे पाद उक्तम्—ऋच पादग्रहणे ॥१७॥ सूक्तं सूक्तादौ हीने पादे ॥१८॥ अधिके तृच सर्वत्र ॥१९॥ इति। याज्यानुवाक्यादिकं विदधानेन ग्रन्थकृता सूक्तादिगतस्य कस्यचिदंशस्य प्रथमपादस्य समुल्लेखे समग्रा ऋक् प्रत्येतव्या, प्रथमपादतो न्यूनस्य ग्रहणे सकलं सूक्तं बोद्धव्यम् प्रथमपादतोऽधिके गृह्यमाणे तदादिकमृक्त्रयं विज्ञातव्यमिति तदर्थः।

[2] "अत्र सूक्ते प्रथमा अग्निमीळे इत्येषा ऋक् पवमानेष्टौ विनियुज्यते। श्रुतिप्रतिपादितानां दर्शपूर्णमासादीनां कर्मणामनुष्ठाने त्रयोऽग्नयोऽपेक्ष्यन्ते—आहवनीयो गार्हपत्यो दक्षिणश्चेति। ते चाग्नयो वैदिक्या प्रक्रियया समन्त्रमरणिमन्थनेन निष्पाद्यन्ते। अरणिशब्देन मन्थनोपयुक्तम् अश्वत्थकाष्ठं शमीकाष्ठं चोच्यते। तदिदमग्निनिष्पादनम् आधानशब्देनोच्यते। आधानस्य पूर्णाहुत्या समाप्तिः होमेन समाप्तिः, इष्ट्या वा समाप्तिरिति पक्षत्रयम्। तत्रान्तिमे पक्षे तिस्र इष्टयोऽनुष्ठीयन्ते याः पवमानेष्टिशब्देनोच्यन्ते याज्ञिकैः। तत्र द्वितीयेष्टौ स्विष्टकृन्नामक कर्मविशेषानुष्ठाने सूक्तगता प्रथमा 'अग्निमीळे' इत्येषा ऋग् याज्यात्वेन विनियुज्यते। यागे प्रधानदेवतोद्देशेन हविषः प्रदानात् परम् उपयुक्तहविःशेषेणाग्न्युद्देशेन क्रियमाणो यागविशेषः स्विष्टकृच्छब्देनोच्यते। हविषः प्रदानावसरे पठ्यमानो मन्त्रो याज्येत्युच्यते। एवञ्चोक्ता द्वितीय पवमानेष्टौ स्विष्टकृद्यागे हविषो दानावसरे पठनीयेयमृगित्यर्थः।" यद्यपि सूत्रे स्विष्टकृत समुल्लेखो नोपलभ्यते तथापि याज्याशब्दप्रयोगबलात् 'सयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' इति परिभाषया सिध्यति। यत्र यत्र याज्यास्थले गौरवसत्त्वेऽपि याज्याशब्दप्रयोगस्तत्र स्विष्टकृत्सम्बन्धी ग्राह्य इति तदर्थः।

स्विष्टकृतो याज्यात्वेन विनियोग । स च द्वितीयाध्यायस्य प्रथमे खण्डे सूचित—'साह्वान् विश्वा अभियुजोऽग्निमीळे पुरोहितमिति सयाज्ये' [ आ° श्रौ° २।१।२६ ] इति । तत्र कृत्स्नपादग्रहणाद् ऋगित्यवगम्यते, 'ऋच पादग्रहणे' [ आ° श्रौ° १।१।१७ ] इति परिभाषितत्वात् । तथा 'सयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' [ आ° श्रौ° २।१।२१ ] इति परिभाषितत्वात् स्विष्टकृत्सम्बन्धनिश्चय । तत्रापि द्वितीय'मन्त्रत्वेनोदाहृतत्वाद् याज्यात्वम् ।

यद्यपि 'साह्वान्' [ऋ° स° ३।११।६] इत्यनया पुरोनुवाक्ययैव देवताया अनुसरणरूपसंस्कार[1] सिद्धस्तथापि याज्यानुवाक्ययो समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसित —

पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
विकल्प्यान्यतरेणैव देवताया प्रकाशनात् ॥*
पुरोवाक्यासमाख्यानाद्वचनाच्च समुच्चय ॥†

[जैमिनीयन्यायमालाविस्तर १२।४।२]

[1] सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्या [आ० श्रौ० १।७।२] इति परिभाषयैति गय ।

[2] पुरोनुवाक्यया याज्यया च यागगतदेवता स्मार्यते। तादृशेन स्मरणेन कर्मणि कोऽपि गुण आधीयते य संस्कार इति व्यपदिश्यते। तथाविधसंस्कारमन्तरेण कर्म न सिध्यतीति मीमांसकानां सिद्धान्त । पर यदैक एव याग, एकमेवाङ्गकर्म एकैव च देवता तदैकेनैव पुरोऽनुवाक्यामन्त्रेण देवताया अनुस्मरणे सिद्धे याज्याया समुच्चयस्य सर्वथा पिष्टपेषणकल्पमित्याशङ्क्याह—यद्यपीत्यादि ।

* This is not found in the *Jaiminiyanyayamalavistara* xii 4 2 nor in the com on TS ı 1 14

† This line is printed as prose in M and P which read पुरोनुवाक्या for पुरोवाक्या As the former contains a hypermetrical syllable and as the latter is mentioned as a variant in the N S Press edition of the *Jaiminiyanyayamalavistara* and as the connexion is very close between पुरोवाक्या and पुरवात we have adopted पुरोवाक्या No doubt hypermetrical syllables are sometimes met with in *Karikas* specially when some rebellious name

देवताप्रकाशनकार्यस्यैकत्वाद् युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति* चेत्, मैवम्, पुरोनुवाक्येतिसमाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः। किञ्च, 'पुरोनुवाक्यामनूच्य याज्यया जुहोति' [तै० सं० ३।४।१०।४] इति प्रत्यक्षवचनेन देवतोपलक्षणहविष्प्रदानकार्ये भेदोक्तिपुरःसरं साहित्यं विधीयते। तस्मात् समुच्चय इति।

एतच्च 'अग्निम्' इत्यादि सूक्तं नवर्चम्, 'अग्निं नव मधुच्छन्दा वैश्वामित्रः' इत्यनुक्रमणिकायामुक्तत्वात्।[2] विश्वामित्र-पुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात्

---

does not lend itself to the requirements of the metre, still the shortening of the name for the purposes of the metre is much more common The *J N V* and the comm on TS read पुरैवाद (पुरा इव आद, the first alternative as in the previous case) which makes very good sense since they do not read the previous line at all but with विकल्पा in the 2nd line पुरैवाद becomes meaningless

[1] 'ऐन्द्राबार्हस्पत्ये द्वे याज्यानुवाक्यायुगले समाम्नाते—'इदं वामास्ये हविः' [ऋ० सं० ४।४९।१] 'अयं वां परि षिच्यते' [ऋ० सं० ४।४९।२] इत्येकं युगलम् 'अस्मे इन्द्राबृहस्पती' [ऋ० सं० ४।४९।४] 'बृहस्पतिर्नः परि पातु' [ऋ० सं० १०।४२।११] इत्यपरम्। तत्र समुच्चयविकल्पसंशये यथा याज्यापुरोनुवाक्ययोः सत्यपि देवतोपलक्षणार्थत्वेनैकार्थत्वे मिथः समुच्चयः, तथा युगलयोरपि स्यात् अविशेषात् इति प्राप्ते उच्यते—विकल्प एकार्थत्वादिति। याज्यापुरोनुवाक्ययोस्तु पुरोनुवाक्यासमाख्याबलाम्नायप्राप्तविकल्पबाधेन समुच्चय इति विशेषः।' शास्त्रदीपिका। 'पुरः पूर्वम् अनूच्यत इति समाख्या समानजातीययाज्यापेक्षया पूर्वभावं विना न सम्भवतीति तद्बलात् समुच्चयः।'

* Most editions read एकयुग्मयो *Jaiminiyanyayamalavistara*, several of M M 's MSS and Sayana s commentary on TS, however, show clearly that the correct reading is एकयुग्मगतयो

[2] तृतीयमण्डलगतमन्त्राणां द्रष्टुर्महर्षेर्विश्वामित्रस्यैकशतं पुत्रा आसन्। तेषु च मध्यमज्यायांसो मधुच्छन्दसः पञ्चाशच्च कनीयांसः। 'बत्सः, अयं शुनःशेपो मया पुत्रत्वेन प्रतिगृह्यते, स एव युष्माकं ज्येष्ठत्वेनावतिष्ठताम्' इति पित्राभ्यर्थितास्ते ज्यायांसो नाभ्यनन्दन्। मधुच्छन्दास्तु पञ्चाशता कनीयोभिः सार्धं पितुर्वचनं बहुमन्यतेत्यैतरेयब्राह्मणे प्रपञ्चितम्। नामस्य निर्वचनमैतरेयारण्यके [२।२।२] समाम्नातम्—मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति, तन्मधुच्छन्दसो मधुच्छन्दस्त्वम् इति।

तदीय ऋषिः। ऋष गतौ[1] [धा० ६।७] इति धातुः। 'सर्वधातुभ्य इन्' [उ० ४।११७]। 'इगुपधात् कित्' [उ० ४।११९]। वेदमाप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयम्भूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते—'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्, तदृ* ऋषयोऽभवन्'[2] [तै० आ० २।९।१] इति। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते—

'युगान्तेऽन्तर्हितान् वेदान्† सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥' [महा० शा० २१०।१९]

इति। ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

'अविदित्वा ऋषिं छन्दो दैवतं[3] योगमेव च।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥' [बृहद्देवता ८।१३६]

---

[1] The Dhatupatha, however, reads ऋषी गतौ As the *Balamanorama* also shows ऋष we have retained it The comm on TA says ऋषिधात्वर्थविषयत्वादृषयोऽभवन् where ऋषि is formed with इक् for धातुनिर्देश Sayana, however, quotes the root correctly under RV. i. 31 1, iii 30 9, etc Durga's Ganapatha also shows ऋषी and the comm *Manorama* says distinctly तुर्यस्वरानुबन्धोऽयं स्वरादिर्मध्यान्त

* Printed editions read तदृषय where दृ is evidently taken from the next sentence तदृषीणामृषित्वम्

[2] ['कल्पादावेव ब्राह्मणा सृष्टा न त्वस्मदादिवत् कल्पमध्ये पुन पुनर्जायन्त इति'] 'अजा नित्या। पृश्नय' शुक्ला शुद्धा इति यावत्। तान् तपस्यमानान् तपश्चरत स्वयम्भु अनादि ब्रह्म वेद, अभ्यानर्षत्। ऋष गतौ। आभिमुख्येन प्राप्नोत्। त वेदस्यार्पणाद ऋषिशब्दवाच्या अभवन्निति वेदभाष्यम्।' *Balamanorama* on S K 1117

† "सर्गादिसमये वेदान्" इति कौमुदीव्याख्याबालमनोरमाधृत. पाठ।

[3] 'यस्य वाक्य स ऋषि'। या तेनोच्यते सा देवता। यदक्षरपरिमाण तच्छन्द।' [अनु० २।४-६]। योग विनियोग।

'ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं[1] स्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥'

इति । वेदनविधिश्च स्मर्यते—

'स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ[2] एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥'[*] इति ।

अग्निमित्यादिसूक्तस्य च्छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्—'आदौ गायत्रं प्राग्घिरण्यस्तूपात्'[3] [अनु० १२।१४] इति । हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं

---

[1] ब्राह्मणार्थम् appears to be a समाहार द्वन्द्व like योगार्थम् and means the *Brahmanas* laying down the विनियोग and the signification, *cf.* मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान्यृषीन् । कृत्तद्धितादीन्याचाला यजन्तो यागकण्टकाः ॥ and the variant दैवं योगार्थमेव च for दैवतं योगमेव च

[2] Uvata (comm on R P ) reads दैवं योगार्थमेव च

* These three stanzas are taken from Sadguruśisya's commentary on Katyayana's *Sarvānukramani* (1 2) which reads अविदित्व for अविदित्वा in the first stanza

[3] M M notes the reading हैरण्यस्तूपात् in some of his MSS Macdonell adopts the obviously vicious reading हैरण्यस्तूपीयात in his text of the *Sarvanukramani* and mentions हिरण्यस्तूपात् as the reading in several MSS Sadgurusisya explains the formation of गायत्रम् but is silent about हिरण्यस्तूपीय which seems to show that he reads हिरण्यस्तूपात् though a few lines later he appears to quote the rule with हैरण्यस्तूपीयात् The previous rule मण्डलादिष्वाग्नेयमैन्द्रात् does not help us much as the hymns are called आग्नेय, ऐन्द्र, etc. in the *Anukramani* but in the case of the seers no *taddhita* suffix is used. The *paribhasa* [illegible] (अनुक्रमणी, viii 1), however, clearly shows that the author merely names the seer without any तद्धित suffix It may be mentioned in this connexion that in the comm on 1 12 S quotes the rule as प्राग्घिरण्यस्तूपात् and there is no variant

छन्द इत्यर्थः। क्षुरपस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते—'छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः' [ए० आ० २।१।६] इति। अथवा चीयमानाग्निंसन्तादस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति—'प्रजापतिरग्निमचिनुत। स क्षुरपवि[1]र्भूत्वातिष्ठत्। तं देवा बिभ्यतो नापायन्। ते छन्दोभिरात्मानं छादयित्वापायन्। तच्छन्दसां छन्दस्त्वम्' [ तै० स० ५।६।६।१ ] इति। यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दः। तदपि छान्दोग्योपनिषद्याम्नातम्—'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्, ते छन्दोभिरात्मानमाच्छादयन्, यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वम्' [ छा० उ० १।४।२ ] इति। तथा द्योतनार्थं-दीव्यति-धातुनिमित्तो देवशब्द इत्येतदाम्नायते—'दिवा वै नोऽभूदिति तद्देवानां देवत्वम्'[2] [तै० ब्रा० २।२।९।९] इति। अतो दीव्यतीति देवः, मन्त्रेण द्योत्यते इत्यर्थः। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानुक्रमणिकायामुक्तम्— मण्डलादिष्वाग्नेयमैन्द्रात्' [ अनु० १२।१२ ] इति। तत्र सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

अग्निमीळे इति। अग्निनामकं देवम् ईळे स्तौमि। 'ईड स्तुतौ' [ धा° २।९ ] इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः। तथा च पठ्यते—

'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः।
अज्मध्यस्थ-ढकारस्य ळ्हकारं वै यथाक्रमम्॥'[3]

इति। मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निम्? **यज्ञस्य पुरोहितम्।** यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि

---

[1] क्षुरधारासमाना धारा यस्य वज्रस्य स क्षुरपविः। तथाविधवज्रवदत्युग्र इत्यर्थः। S.

[2] देवानामुत्पादिका या प्रजापतेस्तनूः सेयमहोरूपेण निष्पन्ना। अतो देवा हर्षात् 'अस्माकं दिवैवाभूत्' इत्युच्चरितवन्तः। अतो दिवायोगेन देवत्वं सम्पन्नम्। S

[3] This stanza is from Sadguruśiṣya's commentary on Kātyāyana's *Sarvānukramaṇī* on RV i 28 The third line gives examples ईळे मळ पुरोळाश इळ्हा साळ्हा निदर्शनम् The text in Macdonell's edition has to be corrected

यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा, यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? देवम् दानादिगुणयुक्तम्। पुनः कीदृशम्? होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते— अग्निर्वै देवानां होता' [ ऐ० ब्रा० १।२।३ ] इति। पुनरपि कीदृशम्? रत्नधातमम् यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।

[1]अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति [ नि० ७।१४ ]—"अथातोऽनुक्रमिष्यामः। अग्निः पृथिवीस्थानः, तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात्? अग्रणीर्भवति। अग्रं यज्ञेषु प्रणीयते। अङ्गं नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः, न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः— इताद् अक्ताद् दग्धाद् वा नीतात, स खल्वेतेरकारमादत्ते, गकारमनक्तेर्वा दहतेर्वा, नीः परः। तस्यैषा भवति— 'अग्निमीळे'" इति। अस्यायमर्थः—सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वाद् अनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितम् अतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्य 'अग्रणी'रित्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः। एतदेवमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणान्तरम्—'अग्निर्वै देवानां सेनानी'[*] इति। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे[2] आमनन्ति—'अग्निर्मुखं प्रथमो देवतानाम्'[3] [ऐ० ब्रा० १।४] इति मन्त्रः। 'अग्निर्वै देवानामवमः' [ ऐ० ब्रा० १।१ ] इति ब्राह्मणम्। तथा तैत्तिरीयाश्चामनन्ति—'अग्निरग्रे प्रथमो

---

[1] Cf S, under AV III 1 1.

[*] Quoted by Durgacārya in his commentary on Nir VII 14 4 with वै, by Skanda Mahesvara in the form अग्निर्देवतानां सेनानी S. quotes the passage again under AV III 1 1 As Sayana generally follows Durga we have added a वै after अग्नि here Printed editions of RV and AV drop the particle वै

[2] M reads मन्त्रब्राह्मण, but मन्त्रब्राह्मणे being a dual ending in ए, sandhi is barred Cf I. 66 7 ऋग्विधर्यौ यास्केन मन्त्रब्राह्मणे दर्शिते।

[3] This is not found in RV, but is mentioned in the Aitareya Brahmana, Āśvalayana Srautasutra and Kathaka Samhita

देवतानाम्' [तै० ब्रा० २।४।३।३]। 'अग्निरवमो देवतानाम्' [तै० सं० ५।५।१।४] इति च। वाजसनेयिनस्त्वेवमामनन्ति—'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम'[1] इति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्। सन्नममानः सम्यक् स्वयमेव[2] प्रह्वीभवन्नङ्गं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाकं च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्। स्थूलाष्ठीव-नामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति—तत्र न क्नोपयतीत्युक्ते न स्नेहयति, किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते[3]। इत 'इण् गतौ' [धा० २।३४] इति धातुः। अक्त 'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु' [धा० ७।१] इति धातुः। दग्धो 'दह भस्मीकरणे' [धा० १।९७१] इति धातुः। नीतो 'णीञ् प्रापणे' [धा० १।८८५] इति धातुः। अग्निशब्दो ह्यकार-गकार-नि-शब्दानपेक्षमाण एति-धातोस्त्वपक्षा-दयनशब्दादकारमादत्ते अनक्ति-धातुगतस्य पकारस्य गकारादेशं कृत्वा

---

[1] *Cf* SB ii 2 4 2 स वा एनमेतदग्रे देवानामजनयत तस्मादग्निः। अग्रिर्ह वै नामैतद् यदग्निरिति। SB vi 1 1 11 स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्रिः। अग्रिर्ह वै तमग्निरित्याचक्षते परोक्षम् परोक्षकामा हि वै देवाः। Sayana is evidently quoting here from the Kanva recension

[2] This shows that सन्नममान is in the कर्मकर्तृवाच्य

[3] These derivations may appear strange, but we must not forget that they were suggested more than 2500 years ago In Europe even the other day the Greek word *bathos* 'depth' or 'height' was derived from *ba* (गम्) 'to go' *the* (धा) 'to make' and *es* (अस) to be and the Greek verbal form *luthesomai* (1st sing future formed from the passive stem in *then* of *lu* to loose) was analysed into (1) the root *lu* 'to loose,' (2) *th* the relic of *the* of *tithemi* (दधामि) (3) *ê* representing *ja* 'to go' found in *eimi* (एमि), (4) *so* from *esomai*, the substantive verb (5) *mai* representing an oblique case of the pronoun of the 1st person (6) and the whole signifying 'there will be (*so*) a going (*e*) to make (*th*) me (*mai*) loose (*lu*)'

तमादत्ते, यद्वा दहति-धातुजन्याद् दग्ध-शब्दाद् गकारमादत्ते। नीरिति नयति-धातु', स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वाग्नि-शब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति—काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः। तस्याग्नि-शब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनार्थैषा 'अग्निमीळे' इत्यृग् भवतीति।

तामेतामृचं यास्क एवं व्याख्यातवान्— 'अग्निमीळेऽग्निं याचामि ईळिरध्येषणाकर्मा पूजाकर्मा वा। पुरोहितो व्याख्यातः। यज्ञस्य[*] देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा[1]। यो देवः सा देवता। होतारं ह्वातारम्। जुहोतेर्होतेत्यौर्णवाभः। रत्नधातमम् रमणीयानां धनानां दातृतमम्' [नि० ७।१५] इति। अस्यायमर्थः—ईडति-धातोः[†] स्तुत्यर्थत्वं प्रसिद्धम्। 'धातूनामनेकार्थत्वम्' इति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयेऽध्याये [नि० २।१२]—'यद्देवापिः शन्तनवे पुरोहित' [ऋ० स० १०।९८।७] इत्येतामृचमुदाहृत्य 'पुर एनं दधति' इति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधते' [तै० स० २।१।२।९] इत्यामनन्ति। देवशब्दो दान दीपन-द्योतनानामन्यतममर्थमाचष्टे।

---

[1] Patañjali (v 1 59) adds another meaning दिवेरर्थ्यकर्मणो देव

[*] Both Durga and Skanda Mahesvara, however, read 'यज्ञस्य,' meaning यज्ञस्य व्याख्यात, the word यज्ञ having been explained in iii 19

[†] Printed editions read ईडतिधातो where ईडति is grammatically indefensible With इक् we should say 'ईडि and with श्तिप् ईडि,' and in both cases धातु will be superfluous, though the commentator uses expressions like भवति धातु, दहति धातु etc There is hardly any doubt that the भाष्यकार wrote ईडधातो which is strictly correct. Yaska says ईळि and Patañjali writes ईडि स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते। अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्तीति। (Mbh i 3 1) In the commentary on AV we often find the correct form चष्टे instead of the incorrect form चष्टति Similarly, under RV. iii 27. 1 जिगाति is the correct reading and not गाति

[2] "निपातायोप… …स्वयेति तै… अनेकार्थो …

यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति। दीपन-द्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः। यद्यप्यग्निः[1] पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद्* द्युस्थानो भवति। देवशब्द-देवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया। होतृ-शब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति। और्णवाभनामकस्तु मुनिः जुहोति-धातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्। रत्न-शब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः [निघ० २।१०]। रमणीयत्वाद्रत्नत्वम्। दधाति-धातुर[2]स दानार्थ[2]वाचीति[3]। तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम्।

अथ व्याकरण-प्रक्रियोच्यते। अगि-धातोर्गत्यर्थात्[4] [धा० ५।३८] 'अङ्गेर्नलोपश्च' [उ० ४।५०] इत्यौणादिकसूत्रेण नि-प्रत्ययः[5]। इदित्त्वान्नुमागमेन[6] प्राप्तस्य नकारस्य लोपश्च भवति। अङ्गति स्वर्गं† गच्छति हविर्नेतुमित्यग्निः। तत्र 'धातोः' [६।१।१६२] इत्यकार उदात्तः। 'आद्युदात्तश्च' [३।१।३] इति प्रत्ययगत इकारोऽप्युदात्तः। 'अनुदात्तं पदमेकवर्जम्' [६।१।१५८] इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम्। तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते। 'सति शिष्टस्वरो बलीयान्' [(? ६।१।१५८।९] इति हि न्यायः। ततोऽन्तोदात्तमग्निप्रातिपदिकम्। 'अनुदात्तौ सुप्पितौ' [३।१।४] इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम्। तस्य 'अमि पूर्वः' [६।१।१०७] इति यत् पूर्वरूपं तदुदात्तम्, 'एकादेश उदात्तेनोदात्तः' [८।२।५] इति सूत्रितत्वात्। अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या।

मतद्वयं यास्केन प्रदर्शितम्। 'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके' [नि० १।१२] इति।

---

[1] The reference is to *Nirukta* vii 5 2: अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः।

* वहन् is a very good variant　　† See p 30.

[2] Both धातु and अर्थं are superfluous　　[3] स्वाध्यायमर्थं, (*p* 10) ... इति।

[4] 'रख रखि ... रगि लगि अगि वगि ... गत्यर्थाः' [धा० ५।१११-१४२]।

[5] 'नेड्वशि कृति' [पा० ७।२।८] इतीट्-प्रतिषेधः। [6] इदितो नुम् धातोः [पा० ७।१।५८]।

तमादत्ते, यद्वा दहति-धातुजन्याद् दग्ध-शब्दाद् गकारमादत्ते । नीरिति नयति-धातुः, स च ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाग्नि-शब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति—काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः । तस्याग्नि-शब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायैषा 'अग्निमीळे' इत्यृग् भवतीति ।

तामेतामृचं यास्क एवं व्याख्यातवान्—'अग्निमीळेऽग्निं याचामि ईळिरध्येषणाकर्मा पूजाकर्मा वा । पुरोहितो व्याख्यातः । यज्ञस्य* देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा[1] । यो देवः सा देवता । होतारं ह्वातारम् । जुहोतेर्होतेत्यौर्णवाभः । रत्नधातमम् रमणीयानां धनानां दातृतमम्' [नि० ७।१५] इति । अस्यायमर्थः—ईडति-धातोः† स्तुत्यर्थत्वं प्रसिद्धम् । 'धातूनामनेकार्थत्वम्'[2] इति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः । पुरोहितशब्दो द्वितीयेऽध्याये [नि० २।१२]—'यद्देवापिः शन्तनवे पुरोहितः' [ऋ० सं० १०।९८।७] इत्येतामृचमुदाहृत्य 'पुर एनं दधति' इति व्याख्यातः । तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पशुनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधते' [तै० सं० २।१।२।९] इत्यामनन्ति । देवशब्दो दान-दीपन-द्योतनानामन्यतममर्थमाचष्टे ।

---

[1] Patañjali (v. 1. 59) adds another meaning: दिवेरैश्वर्यकर्मणो देवः.

* Both Durga and Skanda Maheśvara, however, read 'यज्ञस्य,' meaning यज्ञस्य व्याख्यातः, the word यज्ञ having been explained in iii. 19.

† Printed editions read ईडतिधातोः where ईडति is grammatically indefensible. With श्तिप् we should say 'ईडि' and with श्तिप् 'ईडि,' and in both cases धातु will be superfluous, though the commentator uses expressions like अर्मति धातु, दहति धातु etc. There is hardly any doubt that the भाष्यकार wrote ईडधातोः which is strictly correct. Yāska says ईळि and Patañjali writes: ईडि. स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते । अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्तीति । (Mbh. i. 3. 1). In the commentary on AV. we often find the correct form वष्टि instead of the incorrect form वशति. Similarly, under RV. iii. 27. 1 जिगाति: is the correct reading and not गाति.

[2] "निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥"

यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपन-द्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः । यद्यप्यग्निः[1] पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद्[2] द्युस्थानो भवति । देवशब्द-देवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृ शब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति । और्णवाभनामकस्तु मुनिः जुहोति-धातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम् । रत्न-शब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः [निघ० २।१०] । रमणीयत्वाद्रत्नत्वम् । दधाति-धातुर[4]त्र दानार्थ[4]वाचीति[5] । तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम् ।

अथ व्याकरण-प्रक्रियोच्यते । अगि-धातोर्गत्यर्थात्[6] [धा० ५।३८] 'अङ्गेर्नलोपश्च' [उ० ४।५०] इत्यौणादिकसूत्रेण नि-प्रत्यय । इदित्वान्नुमागमेन[8] प्राप्तस्य नकारस्य लोपश्च भवति । अङ्गति स्वर्गं[3] गच्छति हविर्नेतुमित्यग्नि । तत्र 'धातोः' [६।१।१६२] इत्यकार उदात्तः । 'आद्युदात्तश्च' [३।१।३] इति प्रत्ययगत इकारोऽप्युदात्त । 'अनुदात्त पदमेकवर्जम्' [६।१।१५८] इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम् । तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते । 'सति शिष्टस्वरो बलीयान्' [ना ६।१।१५८।९] इति हि न्यायः । ततोऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ सुप्पितौ' [३।१।४] इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम् । तस्य 'अमि पूर्वः' [६।१।१०७] इति यत् पूर्वरूप तदुदात्तम्, 'एकादेश उदात्तेनोदात्त' [८।२।५] इति सूत्रितत्वात् । अग्निशब्दो धातुजन्मेति मते सेय प्रक्रिया सर्वापि द्रष्टव्या ।

मतद्वय यास्केन प्रदर्शितम् । 'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके' [नि० १।१२] इति ।

---

[1] The reference is to *Nirukta* vii 5 2· अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः ।

[2] वहन् is a very good variant  [3] See p 30

[4] Both धातु and अर्थ are superfluous  [5] धनामर्थं (p 10) इति ।

[6] अग रुचि ... रगि लगि अगि वगि ... गत्यर्थाः' [धा० १।१४१।१४२] ।

[7] 'नेड्वशि कृति' [पा० ७।२।८] इत्यादेः प्रतिषेध ।  [8] इदितो नुम् धातोः [पा० ७।१।५८] ।

गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषोऽन्त उदात्तः' [फि० सू० १।१] इत्यन्तोदात्तत्वम्। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह। 'अथ निर्वचनम्। तद् येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन। अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्, न त्वेव न निर्ब्रूयात्।' [नि० २।१] इति। अस्यायमर्थः—तत् तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम्। स्वर उदात्तादिः। संस्कारो नि-प्रत्ययादिः। किञ्च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम्। शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः। तत्र भवो गुणो गतिरूपोऽर्थः। तेनान्वितौ। तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्छब्देऽनुगतो न भवेत्, तस्यैव व्याख्यानम्—अप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनाग्ना नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमान् अर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्। ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा स निर्बन्धः। तदानीं स पुमान् केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत तस्मिञ्छब्दे योजयेत्। वृत्तिः क्रिया, तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्याद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ *निषेधार्थमकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादावकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकाररूपवर्णेन† साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति।

---

* S. probably wrote निषेधार्थकम्

† गकारवर्णेन M.P.

ईळे इत्येतत् पदं कृत्स्नमप्यनुदात्तम्, 'तिङ्ङतिङः' [८।१।२८] इत्यतिङन्तादग्निशब्दात् परस्य 'ईळे' इत्यस्य तिङन्तस्य निघातविधानात्। पदद्वयसंहिताकाले त्वीकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' [८।४।६६] इति स्वरितत्वम्। तस्मादूर्ध्वंभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात् संहितायामनुदात्तानाम्' [१।२।३९] इत्यैकश्रुत्यं प्रचयनामकं भवति। पुरः-शब्दोऽन्तोदात्तः, 'अयं पुरो भुवः'* [तै० सं० ४।३।२।१] इत्यस्य तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' [५।३।३९] इति पूर्वशब्दादस्प्रत्ययः पुरादेशश्च। ततोऽस्य प्रत्ययस्वरः।[1] धाञो निष्ठायां 'दधातेर्हिः' [७।४।४२] इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ°' [६।२।२] इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा 'पुरोऽव्ययम्' [१।४।६७] इति गतिसंज्ञायां 'गतिरनन्तरः' [६।२।४९] इति पूर्वपदप्रकृतिस्वरत्वम्। तत्र ओकार उदात्त। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयस्वरप्राप्तौ 'उदात्तस्वरितपरस्य सन्नतरः' [१।२।४०] इत्यतिनीचोऽनुदात्तः।

'यजयाच°' [३।३।९०] इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात् स्वरितत्वम्। देव-शब्दः पचाद्यजन्तः। स च फिट्स्वरेण[2] प्रत्ययस्वरेण[3] चित्स्वरेण[4] वान्तोदात्तः। ऋत्विज्-शब्द ऋतौ

* In the printed editions no accent marks are shown But since this is quoted to establish the correct accent of पुर accent marks are absolutely essential here as in the case of रत्न धात later on In the printed TS व is marked with the sign of the अनुदात्त because of the following उदात्त.

1 S discards the first explanation in his subsequent writings. See S, under i. 44 10, i 55. 3, i. 94. 6, AV. iii 19. 1, etc.

2 फिषोऽन्त उदात्त. [फि॰ १।१]।

3 प्रत्यय । परश्च । आद्युदात्तश्च [पा॰ ३।१।१-३]।

4 चित [पा॰ ६।१।१६३]।

यजतीति विग्रहे सति 'ऋत्विग्दधृक्°' [३।२।५९] इति निपातितः। 'गतिकारकोपपदात् कृत्' [पा० ६।२।१३९] इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृ-शब्दस्तृन्प्रत्ययान्तः, नित्स्वरेणाद्युदात्तः[1]। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो 'नब्विषयस्यानिसन्तस्य' [फि० २।३] इत्याद्युदात्तः। तथा चाम्नायते 'रत्नं धात'* [ऋ० सं० ४।३५।८] इति। रत्नानि दधातीति विग्रहः। समासत्वादन्तोदात्तो रत्नधा-शब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्-प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचितौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वमिति।

वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः।
विज्ञातं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते ॥१॥

अग्निम्—Av. *Atram* is a different word altogether. Skt *agnih*, Lat *igni-s*, Slavonic *ogni*, O Lithuanian *ungni-s*.

ईळे—ड between two vowels is changed into ळ in RV In ईडे, ड comes between the vowels ई and ए, so it is changed, but in ईड्य it stands between the vowel ई and the semi-vowel य and therefore remains unchanged. When, however, we resolve the semi vowel य followed by the vowel अ into इ and अ for the sake of the metre, we must read ईडिअ

Scholars, both Indian and European, have expressed widely divergent views regarding the exact meaning of the root Yaska explains अग्निमीळे as अग्निं याचामि and says. ईळिरध्येषणाकर्मा पूजाकर्मा

---

[1] ञ्नित्यादिर्नित्यम् [पा० ६।१।१९७]।

* M reads रत्न धातमं without any accent mark and without any reference M's followers have tried to improve upon this reading and printed "रत्न धातमं" इति Similarly under i. 157. 2 M. M prints मधुपाश्वो रत्न रत्नधेयम् and is unable to trace the quotation His followers go a step further and print 'मधुपाश्वो रत्न' रत्नधेयम् of course without any reference The correct reading is 'मधुपाश्ने रत्नं' and the expression occurs in RV. i 84. 2

वा Durga explains it thus ईळिधातुः 'अध्येषणाकर्मा' याच्ञाकर्मा इह, अन्यत्र पूजाकर्मा 'वा' अपि In the Dhatupatha [ii 9] the root is read as ईड स्तुतौ The *Mahabhasya* [i 3 1, vi 1 94] says ईडि स्तुतिचोदनायाच्ञासु दृष्टः, प्रेरणे चापि वर्तते, i e, ईड is found in the senses of praise, prompting and praying (for something), it is also used in the sense of 'sending' Geldner points out that in iv 24 2, v 69 3 etc ईड is synonymous with हु In many passages ईड is followed by हु and in others हु by ईड् So Geldner thinks ईड् means 'to invoke' Bloomfield on the other hand, holds that ईड is synonymous with इ Passages like य वाघतो वृणत अध्वरेषु i 58 7 and य विप्रास ईळते अध्वरेषु x 30 4 are quoted by him in support of his contention Acc to him ईड् is from इष् द् (इष् to wish) even as नीड is from निष द *Cf* Goth *aistan aida*, *to be shy, timid, to honour*, Gk *aidomai* (for **aiz domai*) to be ashamed to stand in awe of, to respect another's misfortune, to feel regard for him

The root ईड् occurs but rarely in classical Sanskrit, one well known instance being शिव शङ्कर शम्भुमीशानमीडे

पुरोहितम् (from पुरस and हित < *धित)—the domestic priest. ऋत्विज्—*the officiating priest at a sacrifice* There were originally seven *ritviks** होत्र पोत्र, नेष्ट्र, अग्नीध प्रशास्तृ (= मैत्रावरुण) अध्वर्यु ब्रह्मन् The number later rose to 16 (i) होता, मैत्रावरुण, अच्छावाक, ग्रावस्तुत्, (ii) अध्वर्यु, प्रतिप्रस्थाता नेष्टा, उन्नेता, (iii) ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्र, पोता, (iv) उद्गाता, प्रस्तोता प्रतिहर्ता, सुब्रह्मण्य

पुर is derived by Indian grammarians from पूर्व with अस European scholars point out that both पूर्व and पुर, पुरा, etc are derived from the root पृ or पॄ Av *puro* Gk *paros*, Goth *faura*, O E *fore*

धित is found in such compounds as सुधित, दुर्धित, मितधित युवधित,

---

* *Cf* RV ii 1 2

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायत ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥

etc (*cf* Pānini vii 4 45) In Av and O Persian we find *data* with the full grade In Lat *con ditus*, *ab ditus*, *creditus*, etc *ditus* corresponds to Skt हित *Cf* Gk *thetos* In the case of the root रुध्, which became later रुह्, we have a similar breaking down of ध to ह् though the original ध is preserved in forms like न्यरोध, वीरुध, etc Similarly the imper 2 sing ending धि (Gk *thi*, Av *δi*) became हि in later Skt though it is preserved in forms like जुहुधि एधि, शाधि, etc

Both पुरोहित and पुर धा are used in A B 40 1 न ह वा अ पुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद् राजा यक्ष्यमाणो ब्राह्मण पुरो दधीत.

यज्ञस्य—is to be construed with ऋत्विजम् and not with पुरोहितम्, as the genitive generally precedes the word governing it and as both यज्ञस्य and ऋत्विजम् belong to the same pada In viii 38 1 Indra and Agni are called the *ritviks* of the Yajna यज्ञस्य हि स्थ ऋत्विजा. यज्ञ Av *yasna*, Gk *hagnos*, यज्ञस्य Gaθ *yasnahya* Y AV *yasnahe*.

देवम्—qualifies ऋत्विजम् (the divine priest) or is in apposition with अग्निम् (God the priest) In view of x 22, 2 and v 26. 7 where we find दधाता देवमृत्विजम् the explanations of Madhava (यज्ञस्य स्वामिनम्) and Skandasvāmin (यज्ञस्य दातार दीपयितार वा। यज्ञ हि देवेभ्यो मनुष्येभ्य चाग्निर्दाति सदायत्तत्वात् दीपयति च) can hardly be accepted

Indian commentators are generally agreed in deriving देव from दिव् 'to shine The derivation however presents two difficulties In the first place the suffix ought to be क acc to इगुपधज्ञाप्रीकिरः क iii 1 135 [1] In the second place the feminine will be formed with आ instead of ई The first difficulty is got over by adding the suffix अच् acc to नन्दिग्रहिपचादिभ्यो ल्युणिन्यच iii 1 134 and the second by reading देवट in the पचादि list with ट as the indicatory letter As is well known पचाद्यच् can supersede any previous or subsequent rule and when a प्रातिपदिक or प्रत्यय has ट as an indicatory letter the feminine is formed with unaccented ई acc to टिड्ढाणञ्° iv 1 15

[1] With क the form will be दिव and not देव

European commentators, generally, derive देव from दिव् heaven The word originally meant celestial (or the son of heaven) and then it came to mean God Even though the secondary suffix अ has been added there is no वृद्धि as in the case of भैषज adj 'healing', noun 'medicine', from भिषज् physician We may explain this view-point thus in Sanskrit सर्वबाधकाद 'दिव्'शब्दात् 'तस्येदम्' [४।३।१२०] इति वा 'तस्यापत्यम्' [४।१।९२] इति वा अण्। 'देवब्रह्मणोरनुदात्त' [१।२।३८] इत्यादिनिर्देशाद् गुण.। प्रत्ययस्वरेणान्तोदात्तत्वम्।

The root दिव् is merely an extended form of द्यौ to shine, so it is difficult to see how the existence of such a root can be repudiated. The Latin words *divine*, *Diana* and the Greek words *dios* and *Zeus* are all connected with this root See BLOOMFIELD, *The Religion of the Veda*, pp 108 109

देव appears as *daēva* in Av but means (gods of the pre Zoroastrian period, i e ) 'demon', similarly *ahura* corresponding to Sanskrit असुर (which originally meant the highest divinity but later came to signify) 'demon' means God in Av Skt *deva m*, Av *daēvəm*, Lat *deu m*

ऋत्विजम्—The formation is explained by RV x 2 5 यजिष्ठो देवाँ ऋतुशो यजाति, AB xxii 4 ऋत्विज ऋतुयाजान् यजन्ति, etc Skt *ṛtuh*, Av *ratu*, Gk *artu s*, Lat *artu s* Skt *yajati* Av. *yazaite*, Gk *hazomai* (for **hagio mai*) 'I revere'

होतारम्—In the 1st pada, Agni is called पुरोहित, the domestic priest, in the 2nd pada, he is called the priest of the sacrifice and in the third pada the seer mentions the particular sacrificial priest, *viz*, Hotr "When the Purohita who was the spiritual adviser of the king in all his religious duties, actually took part in one of the great sacrifices . he was normally the Hotr"

There is a difference of opinion among scholars, both Indian and foreign, regarding the derivation of the word होतृ Aurna vabha, a very ancient writer derives it from हु 'to sacrifice,' while Yaska and his followers think that the word comes from ह्वे or ह्व 'to invoke' In the *Aitareya Brahmana* होतृ is derived

from आ वह्*. The function of the होतृ is no doubt to invoke the gods and this is emphasised in the Brāhmana derivation The word, however, corresponds exactly with Av *zaotar* and is to be derived from हु (from which, by the way, the English word God is also derived) Thus Macdonell and Keith write in the *Vedic Index* "होतृ is the name of one of the oldest and most important priests of the Vedic ritual, the counterpart of the Zaotar of the Avestan priesthood The word must be derived from हु 'sacrifice' as was held by Aurnavābha, this indicates a time when the होतृ was at once sacrificer (the later Adhvaryu) and singer But the functions were already clearly divided in the Rigveda where the Hotr's chief duty was the recitation of the Sastras He was also in the older period often the Purohita of the king, an office later filled by the ब्रह्मन् priest "

Macdonell appears to have changed his opinion later, as in the *Vedic Reader* he derives होतृ from हू to call '

Lanman points out that the sense of 'invoker,' naturally suggested by his function in the ritual, was popularly associated with the original sense of 'offerer' and the word thus came to be connected with हू to 'invoke '

स्वधातम्—Masculine words ending in आ like स्वधा, गोपा, etc , became practically obsolete in classical Sanskrit, though

---

* यदन्यो जुहोति अथ योऽनु चाह यजति च, कस्मात् त होतेत्याचक्षत इति ? यद्वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्वम्। 1 2

"They say, 'Since another pours the libation, then why do they style Hotr him who recites (the invitatory verses) and says the offering verses?' In that he here according to their portion invites the deities, (saying) 'Bring hither N N , bring hither N.N ', that is why the *Hotr* has the name " (KEITH).

S. explains the formation thus

स्वमते स्वस्यामीष्टायाः प्रक्रियया होतृशब्दनिष्पत्तिर्न तु जुहोतिधातो.। तस्माद्धोम कर्तृत्वाभावेऽप्याह्वयतिधातोर्होतृत्वमुपपन्नम्।

grammarians mention स्थिवपा, मनश्वा, etc The comparative and superlative suffixes also are much more frequent in Vedic than in classical Sanskrit For रत्नधातमम् we should probably say भितरां रत्नदम् in classical Skt

In vıı 16 6 Agnı is invoked thus अधि रत्न यजमानाय सुक्रतो त्वं हि रत्नधा असि In v. 1 5 Agnı is described thus दमेदमे सप्त रत्ना दधानोऽग्निर्होता निषसादा यजीयान् In VS xxvıı 15 Agnı is described as वसुधातम Sometimes रत्न occurs along with द्रविण, as दधासि रत्न द्रविणं च दाशुषे ı 94 14, कि नो अस्य द्रविणं कद्ध रत्नम् ıv 5 12, sometimes with वसु, as, वसु रत्ना दयमानो वि दाशुषे ııı 2 11 So रत्न must mean jewel gems, riches, treasure Geldner says "ratna Kleinod (gem), especially in its older sense *viz*, the prize of victory, reward The word is often used for the reward which the sacrificer or singer expects ' The derivation is uncertain Some derive it from रा to give, some from रम् to rejoice while some modern philologists postulate a root **rent* for this word

The suffixes तर and तम are generally separated by अवग्रह in the pada text *e g*, चित्रश्रवःऽतम (ı 1 3) etc

In the case of words ending in दातर दातम धातम पातम गोपातम भृतर भृतम and हतम however it is these words that are separated and not तर and तम This appears to be due to analogy We shall see that भ्याम् भिस भ्यस and सु are not separated after long vowels So रत्नधामि is analysed रत्नऽधामि and after रत्नऽधामि we have रत्नऽधातमम्,* etc Thus we have वरिवःऽधातम ıx 1 3 but वरिवोवित्ऽतरस्य vııı 48 1 Sk *dhatamam* Av *datamam*

2

| | |
|---|---|
| अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ॥ | अग्निः । पूर्वेभिः । ऋषिऽभिः । |
| रीड्यो नूतनैरुत ॥ | ईड्यः । नूतनैः । उत । |
| स देवाँ एह वक्षति ॥२॥ | सः । देवान् । आ । इह । वक्षति ॥२॥ |

Agni is worthy of being praised by ancient sages and by modern (ones), may he bring hither the gods

अयम् अग्निः पूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यो नूतनैः उत इदानीन्तनैरस्माभिरपि स्तुत्यः। सः अग्निः स्तुतः सन् इह यज्ञे देवान् हविर्भुज आ वक्षति। 'वह प्रापणे' [धा० ११८५] इति धातुः। आवहत्वित्यर्थः। पूर्वेभिरित्यत्र 'बहुलं छन्दसि' [७।१।१०] इति भिस ऐसादेशाभावः। 'पुर्व* पर्व मर्व पूरणे' [धा० १५६८-७०] इति धातुः। पूर्वतिधातोरन्-प्रत्यय औणादिकः। इन्प्रत्ययान्त ऋषि-शब्दः। 'ऋष्यन्धक°' [४।१।११४] इति निपातनाल्लघूपधगुणाभावः। कित्प्रत्ययो वात्र ज्ञेयः [उ० ४।११९]। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् "तित् स्वरितम्"† [६।१।१८५] इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन "ईडवन्द°" [६।१।२१४] इत्यादिनाद्युदात्तत्वम्। 'नवस्य नू त्नप्तनप्खाश्च' [५।४।३०।६] इति वार्त्तिकेन‡ नवशब्दस्य

---

¹ In the words of RV पुराणै

* पूर्व पर्व मर्व पूरणे—M P, under i 19 7 M P read पूर्व पर्व मर्व पूरणे, Some Dhatupāthas read पूर्व with long ऊ, but पुर्व is the correct form of the root The *Manoramā* on Durga's Dhātupātha says इत्समध्यपवर्गीयवकारोऽयम्। दन्त्योष्ठ्योऽयमिति मैत्रेय।

† The rule is sometimes quoted as तित् स्वरितम् and sometimes as तित् स्वरित The latter would appear to be the correct form, but it is difficult to say anything for certain *Cf* अनुदात्तौ सुप्पितौ iii 1 4 and अनुदात्त प्रश्नान्ताभिपूजितयोः viii 2 100

‡ M M notes that the portion नवस्य नू त्नप्तनप्खाश्च इति वार्त्तिकेन is added in the margin in several of the MSS collated by him. This shows that it was originally a reader's note which subsequently became a part of the text S derives नूतन also under iii 32 13 (नवशब्दस्य नप्तनप्खाश्च प्रत्यया वक्तव्या नू इत्यादेशश्च) and under iii. 47. 5 (नवशब्दस्य नू इत्यादेशः तप्तन[प्]खाश्च प्रत्यया वक्तव्या इति त्नप्[प्]प्रत्यय) where the printed editions drop the न after न

ईङ्खयन्ति—cause to swing, caus of ईङ्ख to swing, the root is not much used in class Skt, but is preserved in प्रेङ्खा (=दोला) वाचमीङ्खय (lit word moving) and समुद्रमीङ्खय (causing the Soma vessel to shake) are used in RV

पर्वतान् गिरः—Acc to RP iv 76 final न् is changed before initial ग only in the following cases ताँस्ते, सर्वाँस्तान्, देवाँस्त्वम्, ताँस्त्रायस्व and आवर्दँस्त्वम्

पर्वतान्—पर्व means 'joint,' hence पर्वत means mountain' because the hills rise tier on tier As clouds appear exactly like mountains* from a distance पर्वत means 'cloud' also The English word 'cloud' is from O E clūd which meant 'rock' 'In early Middle English cloud is still used in this sense' S takes पर्वत in the sense of मेघ Skandasvāmin and Venkatamadhava take the word in its usual sense, ये महाबलत्वात् समुद्रे पर्वतानपि पातयन्ति समर्थाः Sk ये चलयन्ति पर्वतान् V.M. Here, as in many other places, Venkatamadhava's explanation is the right one Cf i 80 5 प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् । प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ "They make the mountains rock and reel, they rend the forest kings apart Onward, ye Maruts, drive, like creatures drunk with wine, ye Gods, with all your company" iii 26 4 ह्रदुनयो मरुतो विश्ववेदसः प्र वेपयन्ति पर्वताँ अदाभ्याः "Pourers of floods, the Maruts Masters of all wealth, they who can ne'er be conquered, make the mountains shake" viii 7 4 वपन्ति मरुतो मिहं प्र वेपयन्ति पर्वतान् । यद् यामं यान्ति वायुभिः ॥ "The Maruts spread the mist abroad and make the mountains rock and reel, when with the winds they go their way" v, 56 4 अश्मानं चित् स्वर्यं पर्वतं गिरिं प्र च्यावयन्ति यामभिः 'cause e en the heavenly stone to shake, yea, shake the rocky mountain

In the Vedas and Brahmanas पर्वत is accented on the first syllable This Unadi rule seems to show that in classical Sanskrit it was accented on the final syllable This appears all the more probable from the Varttika पर्वमरुद्भ्यां तप् v 2 122 10

* मेघमालेव यश्चायमारादपि विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी न[illegible] [illegible]त्तररामचरित १।२४ ।

*as they race along*", i 167 8 उत च्यवन्ते अच्युता ध्रुवाणि "firm things are overthrown that ne'er were shaken", v. 57 3 धूनुथ द्यां पर्वतान् दाशुषे वसु नि वो वना जिहते यामनो भिया। कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ॥ "You shake the sky and mountains for wealth to the liberal giver, the forests bend down out of your way from fear O sons of Prśni, you rouse the earth when you, O terrible ones, have harnessed the spotted deer for triumph" (M M ), v 60 2 वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद्रेजते पर्वतश्चित्। 'Through fear of you, fierce ones, woods bow down, even the Earth trembles, even the mountain' In v 54. 3 they are called पर्वतच्युत In the *Meghaduta* [i 14] also we find अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः * ।

तिरः—across, cross wise from तॄ to cross, exactly as पुरः is derived from पॄ Av *taro* Both Skt *tirah*, and Av *tarō* when used as prepositions govern the Acc The two Madhavas and Sayana supply कुर्वन्ति after तिरः Max Muller takes तिरः as a prep and translates 'across the surging sea' Geldner supplies 'kommen' (come) and translates—'who shake the mountains and come over the billowy sea' Since, however, समुद्रमीङ्खय occurs in RV may we not take तिरः as an adverb and supply ईङ्खयन्ति in the second clause—पर्वतं समुद्रं तिरः ईङ्खयन्ति agitate cross wise the billowy ocean? Or, may we not construe समुद्रं तिरः पर्वतम् ईङ्खयन्ति toss billows across the sea? In AV. xiii 1 36 we have तिरः समुद्रमति रोचसेऽर्णवम् which may be translated as 'thou shinest over the billows across the ocean'

समुद्रम्—is not analysed in the Pada text probably owing to a doubt as to whether it should be समुद्र or सम्उद्र The latter however, is the correct analysis The word lit means 'a collection of waters' उदक appears in three forms उदक, उदन् and उद्र

---

* Raghu II 34 न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्य and VIII 90 द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः are, however positively against the shaking of the mountains by storms

The last stem is found in Skt *udra* 'otter' and Gk *hudōr* 'water'. Skt *anudrah* 'waterless', Gk *ănudros*.

अर्णवम्—derived from अर्ण (अर्णस् acc. to Indian commentators) 'wave' with the possessive suffix व

8

| | |
|---|---|
| आ ये तन्वन्ति रश्मिभि- | आ । ये । तन्वन्ति । रश्मिऽभिः । |
| स्तिरः समुद्रमोजसा ॥ | तिरः । समुद्रम् । ओजसा ॥ |
| मरुद्भिरग्न आ गहि ॥८॥ | मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥ |

Who spread (through the firmament), along with the rays (of the sun), and, with their strength, agitate the ocean ("who shoot with their darts (lightnings) across the sea with might"—M M)...

ये मरुतो रश्मिभिः सूर्यकिरणैः सह[1] आतन्वन्ति व्याप्नुवन्ति* । आकाशमिति शेषः । किञ्च ओजसा स्वकीयबलेन समुद्रं तिरस्कुर्वन्ति तैः मरुद्भिः इत्यन्वयः । तन्वन्ति । 'तनु विस्तारे' [धा° ८।१] । छटो 'झोऽन्तः' [७।१।३] । 'तनादिकृञ्भ्य उः' [३।१।७९] । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य' [परिभाषा] इति तिङ एवाद्युदात्तत्वम् । समुद्रम् । 'उन्दी क्लेदने' [धा° ७।२०] । "स्फायितञ्चि" [उ २।१३] इति रक् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥८॥

आ तन्वन्ति—extend to [the atmospheric region] Skt *tan*, Av *tan* to stretch extend *Cf* Gk *tanumai*, Lat *tendo*, I stretch.

रश्मिभि—with the rays [of the sun] As Geldner points out, after the thunderstorm the Maruts make the path *clear for* the

---

[1] सर्वैर्भाभि Sk, रश्मिसदृशै प्रवचमाहते V M

* व्याप्नुवन्ति—M P But several of M M's MSS show व्याप्नुवन्ति which is also the explanation of Sk

sun  He compares viii 7 8 सृजन्ति रश्मिमोजसा पन्थां सूर्याय यातवे। ते भानुभिर्वि तस्थिरे ॥ "With might they drop the loosened rein so that the Sun may run his course, and spread themselves with beams of light "

9

| | |
|---|---|
| अभि त्वा पूर्वपीतये | अभि । त्वा । पूर्वऽपीतये । |
| सृजामि सोम्यं मधु ॥ | सृजामि । सोम्यम् । मधु ॥ |
| मरुद्भिरग्न आ गहि ॥९॥ | मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥ |

I pour out the sweet Soma juice, for thy drinking, (as) of old...

हे अग्ने पूर्वपीतये[1] पूर्वकाले प्रवृत्ताय पानाय[2] त्वा त्वां प्रति सोम्यं मधु[3] सोमसम्बन्धिनं मधुररसम्[4] अभिसृजामि[5] सर्वतः सम्पादयामि । अतस्त्वं मरुद्भिः सह [आगहि] अत्रागच्छ। अभि। 'एवमादीनामन्तः'† [फि° ४।१४] इत्यन्तोदात्तत्वम्। 'त्वामौ द्वितीयायाः' [८।१।२३] इति त्वादेशः सर्वानुदात्तः।

---

[1] उत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। अथवा बहुव्रीहौ प्रकृत्या पूर्वपदम्. S under i 8 10 इतरदेवेभ्यः पुरा पानाय। महदादित्वात् पूर्वपदान्तोदात्तत्वम्। S under I 131 1. सोमपीतये। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। S. under i 92 18, viii 8 17, TS 1 i 5. etc

[2] This is after Sk who adds [illegible]

[3] मधुरं सोमरसम् S under viii 10 4

[4] Some MSS. read मधुरसम् Under AV iii 14 3 also we find मधुरसम्. Under viii. 74 2, however, we find मधु मधुरसम्, several MSS reading मधुरं रसम् and only one मधुरसम् Under viii 10 4 we read मधुरं सोमरसम्. So मधुरसम् appears to be the correct reading.

[5] Sk rightly regards अभि as a कर्मप्रवचनीय governing [illegible] to अभिरभागे P i 4 91 and explains [illegible]

† See p 21.

पूर्वपीतये। पूर्वा चासौ पीतिश्च। 'पुंवत्कर्मधारय°' [६।३।४२] इत्यादिना पुंवद्भावः। सृजामि। 'सृज विसर्गे' [धा° ६।१३०]। सिपः पित्त्वादनुदात्तत्वम्। विकरणस्वरः। सोम्यम्। 'सोममर्हति यः'* [४।४।१३७]। प्रत्ययस्वरेणान्तोदात्तः। मधु। 'फलिपाटिनमि°' [उ° १।१९] इत्यादिना उ-प्रत्ययः। 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम्। अन्यद् गतम्। अत्र यास्कः—'अभि सृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छ'† [नि° १०।३७] इति ॥९॥

पूर्वपीतये—पीति means the same thing as पीथ पूर्व—Av *paurva*, *pourva*, O Pers *paruva*. पीति—O Bulg *piti*, Gk *posis*, Lat *potio*, a draught, drink The first member of a तत्पुरुष is accented when it is dependent on an action noun in ति V G S, p 456, 2a, P vi. 2 42 दासीभाराणाम्

*Cf* RV. viii 3 7 अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः "men with their lauds are urging thee, Indra, to drink the Soma first," viii 45 22 अभि त्वा वृषभा सुते सुतं सृजामि पीतये, here, the Soma being shed, I pour the juice for thee to drink

---

* सोममर्हति यः—All But the rule is applicable in those cases where the word सोम्य is an epithet to a deity as in द्युम्नी श्लोकी स सोम्य viii 93 8 "bright, meet for Soma, famed in song," etc but not in cases like सोम्यं मधु, सोम्यो रसः, etc The relevant rule here is the next one मये च which means [the taddhita suffix य is added to सोम] also in the sense of मय Under i 14 10 S says सोम्यम्। 'सोममर्हति यः' इत्यनुवृत्तौ 'मये च' इति यप्रत्ययः। सोमस्य विकार इत्यर्थे। 'यस्येति च' इत्यकारलोपः। प्रत्ययस्वरः। Under iii 53 10, etc Sāyana simply quotes the rule मये च Under AV iii 11 8 also we find 'सोममर्हति यः' 'मये च' इति सोमशब्दाद् यप्रत्ययः The correct reading, therefore, is 'सोममर्हति यः' [४।४।१३७] इत्यनुवृत्तौ 'मये च' [४।४।१३८] इति यप्रत्ययः It is perfectly clear the scribe after writing the first य thought he had transcribed the य of प्रत्यय and the reading became corrupt

† This quotation is found in a few MSS only.

सृजाति—Skt. *sṛjati*, Av *hərəzaiti*, *hařəzaiti*, Skt *sṛṣṭa*, Av. *harəšta*

सोम्यम्—relating to or pertaining to Soma When it is an adj to a deity it means Soma loving

मधु—Gk *methu* Lith *medus*, Eng *mead* See IHQ Vol XII, p 10 "द्रवत्वसामान्यान्मृदुत्वाच्च सोमरसो मधु इत्युच्यते।" Sk

---

## SŪRYA

### *Characteristic features*

The line सूर्य आत्मा जगतस्तस्थुषश्च *leaps to the lips of every Indian* when he thinks of the Vedic god Surya The Sun, the noblest visible form of gods, is regarded as the soul of all that moves and all that stands * 'Since his name designates the orb of the sun as well, Surya is the most concrete of the solar deities, his connexion with the luminary never being lost sight of' (MACDONELL *Vedic Mythology* p 30) He is the eye† of Mitra, Varuna and Agni (चक्षुर्मित्रस्य वरुणस्याग्नेः) He is *far seeing* (उरुचक्षा vii 35 8 दूरेदृशे x 37 1) all seeing (सूराय विश्वचक्षसे i 50 1), beholds all beings (पश्यञ्जन्मानि सूर्य i 50 7) and the good and bad deeds of mortals (ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् vi 51 2 विश्वस्य स्थातुर्जगतश्च गोपा ऋजु मर्तेषु वृजिना च पश्यन् vii 60 2)

His car is drawn by one steed named Etaśa or seven mares called हरित *(सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे vii 66 15)* or seven horses (सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं

---

* एकैव वा महानात्मा देवता। स सूर्य इत्याचक्षते। स हि सर्वभूतात्मा। तदुक्तमृषिणा—'सूर्य आत्मा जगतस्तस्थुषश्च' इति। तद्विभूतयोऽन्या देवताः। तदप्येतदृचोक्तम्—'इन्द्रं मित्रं वरुणमग्निमाहुः' इति। *Sarvanukramani*, ii 14 20

भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च।
अस्यैके सूर्यमेवैकं प्रभवं प्रलयं विदुः॥—*Bṛhaddevata*, i 61

† तच्चक्षुर्देवहितं शुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्॥ vii 66 16 That eye placed by the gods, bright and rising we would see for a hundred years, we would live for a hundred years

यत्रेमा विश्वा भुवनाधि तस्थुः ॥ इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः। सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥ i. 164. 2-3). His messenger is Pūṣan, and Varuṇa prepares his path for him (यास्ते पूषन् नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति। ताभिर्यासि दूत्यां सूर्यस्य...॥ vi. 58. 3, उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ॥ i. 24. 8).

Since the sun appears on the horizon immediately after dawn, he is described as following the Goddess Dawn even as a young man follows a lovely damsel (सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्) and Dawn is described as Sūrya's wife (वाजिनीवती सूर्यस्य योषा vii. 75. 5). "The same sequence, however, led the Vedic poets to think of the Dawn as the mother of Sūrya (अजीजनन् सूर्यं यज्ञमग्निम् vii. 78. 3) and to describe the Sun as shining from the lap of the Dawns (विभ्राजमान उषसामुपस्थात् vii. 63. 3). In one passage the Dawn is described as leading a bright beautiful horse (श्वेतं नयन्ती सुदृशीकमश्वम् vii. 72. 3)." Just as in later literature the Sun is regarded as a swan, in RV. he is in several passages described as a bird.

The sun shines for the world (उरुष्य विश्वाय), dispels darkness with his light and stirs men to activity (येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना x. 37. 4)

"Sūrya measures the days (अहा मिमानो अक्तुभिः i. 50. 7) and prolongs the days of life (प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि viii. 48. 7). He drives away sickness, disease and every evil dream" (अपामीवामप दुष्वप्न्यं सुव x. 37. 4). In later literature also, we find that the sun is to be worshipped for the cure of diseases (आरोग्यं भास्करादिच्छेत्). There are two things, however, which we miss in the Veda—the reference to the lotus and to the Cakravāka.

In the *Nirukta* (xii. 14) Sūrya is derived from √सृ or √सू or सु + ईर् (सूर्यः सर्तेर्वा, सुवतेर्वा स्वीर्यतेर्वा). But the word is evidently derived from स्वर् light. It is cognate with Gk. *hēlios* and Av *hvarə*. In the Avesta also *hvarə* is the eye of Ahura Mazda and has swift horses.

Hymns i. 50, 115, x. 37 and x. 158 are addressed to Sūrya.

[MACDONELL, *Vedic Mythology*, pp. 30-32; MUIR, *Original Sanskrit Texts*, Vol v, pp. 155-61.]

मित्रस्य' [आ॰श्रौ॰ ६।५।१८] इति। आदितस्तिस्र ऋचः सौर्यस्य पशोर्वपापुरोडाश-हविषां क्रमेणानुवाक्याः। ततो द्वे वपापुरोडाशयोर्याज्ये। तथा च सूत्रितम् —'चित्रं देवानामुदगादनीकमिति पञ्च शं नो भव चक्षसा शं नो अह्ना' [आ॰ श्रौ॰ ३।८।१] इति। अतिमूर्त्तिनाम्न्येकाहे[1] शुनासीर्ये* पर्वणि च सूर्यस्य हविषः 'चित्र'

---

इति सप्त। तत्रातिरात्रसंस्थायामग्निष्टोमोक्थ्यषोडशिस्तोत्राणि दिनेऽनुष्ठा॰ कृत्वा रात्रौ पर्याय-त्रयानुष्ठानं करणीयं भवति। प्रतिपर्यायं च शस्त्रचतुष्टयवचनं भवति। त्रयाणां पर्यायाणां समाप्तावाश्विनं शस्त्रं शंसनीयं भवति। तस्मिन्नाश्विनशस्त्रेऽपि प्रातरनुवाकवदेवाग्न्यादयस्तिस्रो देवताः स्तूयन्ते। प्रातरनुवाकतो विशेषस्त्वसावेव यदत्र सहस्रं ततोऽधिका वा मन्त्रा आसूर्योदयं वक्तव्या भवन्ति। प्रातरनुवाके पुनः शतं ततोऽधिका वा मन्त्राः पठ्यन्ते प्रत्यासावतश्च पूर्वमेव समापनीयो भवति प्रातरनुवाकः। तदुक्तमाश्वलायनेन "प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदितोः शंसेत्" [आ॰ श्रौ॰ ६।५।८] इति, 'प्राग् वयसां प्रवादात्" [४।१३।१] शतप्रभृत्यपरिमितं" [आ॰ श्रौ॰ ४।१५।१] इति च। एतच्चा सूर्योदयं शंसनीयं भवति। तत ऊर्ध्वं सौर्याणि सूक्तानि शंसनीयानि तत्र 'चित्रं देवानाम्' इति शंसनीयम्। सूर्यदेवताकपशुयागानुष्ठाने वपायागे पशुपुरोडाशयागे हृदयादिप्रधानहवियोगे च एतत्सूक्तमारभ्य गतास्तिस्र ऋचः क्रमेणैकैकस्यैकैकानुवाक्या, ततो मन्त्रद्वयं च वपापुरोडाशयागयो-र्याज्यात्वेन विनियुज्यते।

[1] स्वर्गकामेन यजमानेनैकदिनावसेयोऽतिमूर्तिनामकः सोमयागोऽनुष्ठातव्यः, "अतिमूर्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टिभ्यां यजेत। अत्र चान्द्रमस्या सौर्येतरम्" [आ॰ श्रौ॰ ९।८।१२] इति। तत्र कृष्णपक्षे यदहरहः सौर्यया इष्ट्या यजनं तत्र सूर्यदेवताके हविः 'तरणिर्विश्वदर्शत' इत्यृचा गृहीत्वा 'चित्रं देवानाम्' इत्यृचा होतव्यम्। एवं चातुर्मास्यगत-पर्वचतुष्टयगते शुनासीर्ये पर्वणि सौर्यस्य यागस्य 'चित्रम्' इत्येषा ऋग् याज्यात्वेन विनियुज्यते।

* P notes that शुनासीरीये is the reading in three MSS Though acc to P iv 2 32 द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च both शुनासीर्य and शुनासीरीय are available, still S. appears to write शुनासीर्य here, under i. 50 4 and in his com on TS. Under RV. iii. 30 1, iv 57 5, vii. 90 2, vii 92 1, 3, viii 26 25 and x 160 5 the correct reading appears to be शुनासीरीय which is also found in *Āśvalāyana Śrauta Sūtra* and other works

देवानाम्' इत्येषा याज्या। सूत्रितञ्च—'तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीक-मिति याज्यानुवाक्याः' [आ° श्रौ° ४।८।३, २।२०।४*] इति ॥

देवानाम्[1] दीव्यन्तीति देवा रश्मयस्तेषाम्, देवजनानामेव वा अनीकम्[1] तेजःसमूहरूपं[†] चित्रम्[2] आश्चर्यकरं सूर्यस्य मण्डलम् उदगात्[3] उदयाचलं प्राप्तमासीत्। कीदृशम्? मित्रस्य वरुणस्य अग्नेः च। उपलक्षणमेतत्। तदुपलक्षितानां जगतां चक्षुः[4] प्रकाशकम्, चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्य च

* M and P. omit २।२०।४, but since Sāyaṇa says अतिमूत्रि-नाश्वाकाऽ[illegible] प्रवृत्ति च the reference is absolutely essential. See S. under I. 50.4.

[1] देवानाम् अनीकम्—देवानां रश्मीनां यदेतदुदगात् अनीकं समूहः Durga on Nir xii 6 दीव्यन्ति द्योतन्त इति देवाः किरणाः, तेषाम् अनीकं मुखम् आस्यं इत्यर्थः। यद्वा, अनीकं समूहः, किरणपुञ्ज इत्यर्थः। Mah. on V.S. 7. 42 देवानां रश्मीनाम् अनीकं सैन्यसदृशं मण्डलम् S. on TS. दीप्यमानबहुरश्मिरूपाणां देवानां सैन्यसदृशम् S on TB. अन्धकारनिवर्तकत्वादनीकं [illegible] देवसैन्यरूपमादित्यमण्डलम् S. on TA.

† तेज dropped in P.

[2] चित्रम्—Acc. to Uvaṭa, Mahīdhara and others it is an adv. meaning brilliantly, wonderfully. Acc. to the Nirukta, Durga, Skanda, Sāyaṇa and others it is an adj. to अनीकम्. सूर्यात्मना पदार्थरूपेणावस्थितः स्तूयते। उदयकालादारभ्य तावदपररूपेण स्तूयते। चित्रमिति क्रियाविशेषणम्। यच्चित्रमुदगात् चित्रमाश्चर्यभूतम् उदगमत्। आश्चर्यं हि यत् सकौषेण ज्योतिषा सार्वं तमोऽपहन्त्यन्येषां ज्योतिषां ज्योतिरादायोदेति। Uvaṭa on VS. vii. 42. चित्रं रक्तश्वेतादिविविधवर्णम् S. on TS i 4 43. 1, ii. 4. 14. 4. नानादेशवस्त्वादिरूपेण विचित्रम्।. तदेव वैचित्र्यं मन्त्रान्तरेणाम्नातम्—'असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः' इति। S on TB ii 8 7. 4. बहुप्रकारवर्णत्वेन विचित्रम् S. on TA 1 7 6. कालभेदेन रक्तशुक्लादिवर्णोपेतत्वात् चित्रम्। S. on TA. 2. 13. 1 चायनीयं पूजनीयम् S on SB. iv. 3 4 10 चायनीयं पूजनीयम्। यद्वा सर्वदिक्षु रश्मिप्रसारणेन विचित्रम्। S. on AA ii 2 4. 7.

[3] उदगात् उदेति। छान्दसो लुङ्। Bhāskara on TS. उदेति इण्गत्यर्थः[illegible] [२।४।८] इति लुङ्। S on SB. iv 3 4. 10.

[4] मित्रादीनां देवानामपि चक्षुःस्थानम्। तेऽपि हि तेन प्रकाशितं पश्यन्ति। यद्वा, मित्रादिर्देवतादिभिरुपलक्षितस्य[illegible]। [illegible] चैतत्, सर्वदेवतादर्शनार्थत्वात्।

द्यावापृथिवी दिवं पृथिवीमन्तरिक्षं च आप्राः[1] स्वकीयेन तेजसा आ समन्ताद्-पूरयत्। इदम्भूतमण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वस्य प्रेरकः परमात्मा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा[2] स्वरूपभूतः। स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम्। कारणाच्च कार्यं नातिरिच्यते। तथा च पारमर्षं सूत्रम्—'तदनन्यत्वमारम्भणशब्दादिभ्यः'[3] [ब्र॰ सू॰ २।१।१४] इति। यद्वा, स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनायुक्तं सदुपलभ्यते। तथा च श्रूयते—'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति' [तै॰ आ॰ १।१४।१] इति।* आप्राः। प्रा पूरणे' [धा॰ २।५१]। लङि पुरुषव्यत्ययः। अदादित्वाच्छपो लुक्। जगतः। 'गमेर्द्वे च' [३।२।१७८।३] इति क्विप् द्विर्वचनं च। 'गमः क्वौ' [६।४।४०] इत्यनुनासिकलोपः। तस्थुषः। तिष्ठतेर्लिटः क्वसुः। द्विर्वचनम्।* 'शर्पूर्वाः खयः' [७।४।६१]। षष्ठ्येकवचने 'वसोः सम्प्रसारणम्' [६।४।१३१] इति

---

Bhaskara on TS 1 4 43 2 चक्षुर्मित्रादिकस्य सदेवमनुष्यस्य जगतः। आदित्योदये हि रूपाण्यभिव्यज्यन्ते। Uvata मित्रादिग्रहणं च प्रदर्शनार्थम्। देवानां मनुष्याणामन्येषां च प्राणिनामित्यर्थः। SK M on Nir xii 16

[1] आप्राः—आपूपुरत् [आपूरयति D] द्यावापृथिवी चान्तरिक्षं च महत्त्वेन तेन सूर्य आत्मा etc Nir xii 4

[2] अथेदानीं पररूपेण स्तौति—सूर्य आत्मा। पुरुषाभिप्रायमेतत्। तथा च श्रुतिः—'यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः प्रजापतिस्तद्ब्रह्म' इति। सूर्याद्वैतमनेन मन्त्रेण ख्याप्यते। स सूर्यात्मत्वेनोपास्यः। Uvata जगतो जङ्गमस्य प्राणिजातस्य तस्थुषश्च स्थावरस्याप्यात्मा प्रत्यगात्मत्वेन हृदयेऽवस्थितः सूर्यः लोकत्रयम् आप्राः सर्वतः स्वचैतन्येन स्वरश्मिना च पूरितवान्। S on TB

[3] "तत् तस्मात् कारणात् ब्रह्मणः कार्यस्य जगतः अनन्यत्वं पृथक्सत्ताराहित्यम्। कुतः? आरम्भणशब्दादिभ्यः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [छा॰ उ॰ ६।१।४] 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा' [छा॰ उ॰ ६।८।७] 'ब्रह्मैवेदं सर्वम्' [बृ॰ उ॰ ७।३] इत्यादिश्रुतिभ्यः।" सदाशिवेन्द्रसरस्वतीवृत्तिः।

* P notes that all MSS but two read द्विर्वचने

सम्प्रसारणम्। 'आतो लोप इटि च' [६।४।६४] इत्याकारलोपः। 'शासिवसि°'[1] इति [८।३।६०] षत्वम् ॥१॥

The metre of this hymn is Trstubh in which the largest no of the hymns of RV are composed Hence the *Sarvanukramani* [xiv 0 6] says [अनादेशे त्रिष्टुब् देवता ।] त्रिष्टुप् छन्दः । It consists of four verses of eleven syllables (चतुश्चत्वारिंशदक्षरा त्रिष्टुप् चतुष्पदा। एकादशाक्षरे पादे RP xvi 64) An exactly similar metre is found in the Avesta also

चित्रम्—see p 35  देवानाम्—see pp 16 17

उदगात्—3 sing root aor ind of गा 'to go जिगाति is read in the *Nighantu* in the list of गतिकर्मक roots In the Dhatupatha, however, गाङ् गतौ is read in the भू class and गा स्तुतौ च छन्दसि in the हु class As गा became obsolete in classical Skt Panini had to frame the rule इणो गा लुङि ii 4 45 to explain this form

अनीकम्—(Av *ainikəm* cf mod Pers *pešānī*) face thence front of troops troops multitude Most probably it is derived from अन् to breathe though the first element has been regarded as cognate with नि of निज and the second element with अक्ष of अक्षि Uvata explains अनीकम् as face Madhava says अनीकं मुखम् आदित्ये हि सर्वे देवा वसन्तीति S evidently borrows his explanation from Sk who says देवानाम् अनीकं समूहः रश्मिसमूहरूपम्, The mention of चक्षुः in the second pada appears to support Uvata s explanation Madhava in his com on SV also says अनीकशब्दो मुखवचनः । तस्मानीकं मुखस्य मुखमुच्यते । Cf अग्निर्वै देवानामनीकम् सेनाया वै सेनापतिरनीकम् SB 5 3 1 1

---

[1] वसि in the rule can only mean the root वस् so the relevant rule here is शासिवसिघसीनां च P viii 3 60 But S probably thought that with इट् the form would be उषि and so generally takes वसि in the sense of the suffix क्वसु though it is difficult to understand how वसु with the indicatory उ can stand for क्वसु with the indicatory क् By a curious irony of fate S interprets the rule correctly under iii 58 4 but makes a mistake in another direction

१ चक्षु—In the *Nighantu* (Nir III 13) चष्टे is read in the list of roots meaning to see In the Dhatupatha however the sense is changed and we find चक्षिङ् व्यक्तायां वाचि The original meaning of the root appears to have been अभिव्यक्ति Thus on one hand it means चाक्षुषी अभिव्यक्ति, on the other वाचिका अभिव्यक्ति (cf S on RV III 22 2 अभिव्यक्तवागवाच्यत्र धातुरत्राभिव्यक्तिमात्रे वर्तते) So चष्टे means to appear, to see, to show to speak In AV *caste* means to teach Av and O Pers *casman* eye Mod Persian *casm* eye Beng *casma* spectacles चक्षु orig, seeing thence brightness countenance eye

चक्षुर्मित्रस्य वरुणस्याग्नेः—The sun is the luminous substance *par excellence* and consequently he is connected with the देवs the shining ones *par excellence* In the *Gita* (XI 12) the universal form of the Almighty is described thus

दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिता ।
यदि भा सदृशी सा स्याद्भासस्तस्य महात्मन ॥

So in the first line the sun has been described as the face of the gods here he is regarded as the universal eye—the eye of Mitra Varuna Agni i e of the whole universe In the Purusasukta the sun is said to have sprung from the eye of the Almighty

आप्रा द्यावापृथिवी अन्तरिक्षम्—cf IV 14 2 ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् आप्रा द्यावापृथिवी अन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितान ॥ God Savitr has planted his banner on high spreading light for all the world Surya has filled the heaven and earth and firmament making himself known by means of his rays

आप्रा[1]—3 sing s aor ind of प्रा to fill *a pra s t>apras>aprah* the ending being dropped V G S § 144 5 Similarly we have अक्रन् (RV VIII 40 11, IX 72 5) from कृ अस्रा (R V I 116 3) from स्र and in epic Skt अभैः from भी (cf अभैः) Sayana explains

[1] तिङां तिङो भवन्ति इति सिप स्थिवादेश । व्यत्ययेन मध्यम । S on X 74 2 X 106 11 X 1 1 लडि व्यत्ययेन मध्यम X 127 2

अप्रा correctly—आगमानुशासनस्यानित्यत्वात् इगिटौ न 'क्रियेते In classical Skt an ई is inserted between the *s* the sign of the aor and the ending *t* *Cf* *Bhatti*, xv 69 अप्रासीद्विशुनिर्दुसम् Acc to Panini ईट (अस्तिसिचोऽपृक्ते vii 3 96) is dropped by the next rule बहुलं छन्दसि

प्रा is an extended *form* of पृ to fill The *root* is found in Gk *pleto* ( Skt अप्रात्) Lat. *plevi* ( Skt पप्रौ), Lat *pletus* (Skt प्रात ), Lat *plenus* (=Skt प्राण , full

"The principal peculiarity of the older language in regard to inflection is the frequent absence of ई in the endings of the 2nd and 3rd sing act, and the consequent loss of the consonant ending and sometimes of root finals  If the root ends in a vowel, only the consonant of the ending is necessarily lost thus *apras* (for both *apras s* and *apras t*) from √प्रा WHITNEY, *Sanskrit Grammar*, § 888-889

द्यावापृथिवी—The Devata Dvandvas occupy an intermediate stage between mere juxtaposition and fully formed compounds Here each member is used in the dual and each member retains its independent accent  That these were felt to be loosely formed compounds is proved by the fact that sometimes a word or words intervene between the members of the compound *Cf* ii 12 6 द्यावा चिदस्मै पृथिवी नमेते

द्यावा is the Nom du of द्यो heaven (class द्यौ like गौ) Skt *dyauh*, Gk *Zeus*, Skt *dyam* Gk *Zēn*

पृथिवी ( Gk *plataia*) for पृथ्वी Av *pərəθvi*, fem to पृथु lit the broad one *cf* मही (lit the great one) उर्वी (lit the wide one), etc *cf* Nir. i 14 5 प्रथनात् पृथिवीत्याहुः । क एनामप्रथयिष्यत्, किमाधारेति । अथ वै दर्शनेन पृथुः अप्रथिता चेदप्यन्यैः  In SB xi 5 6 3 mention is made of इमां पृथिवीं प्रथिमेन पृथ्वीम् and so the earth came to be known as वसुमती, वसुन्धरा, वसुधा etc

अन्तरिक्षम्—lit situated between [heaven and earth], from *antara* the loc sing of अन्तर between and क्षि to dwell (अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशम् S on i 52 13)  यद् ईक्षन्ते चोक्षयन्त्, तयोर्मध्ये क्षियति, ... ... ... ...

इदमीत्तमभूदिति तस्मादन्तरिक्षम्। SB vii 1 2 23, तद् यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम्। अन्तर्यक्षं ह वै नामैतत् तदन्तरिक्षमिति परोक्षमाचक्षते। J U. B, i 20 4 अन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वम्। Ta B x 14. 2 अन्तरिक्षक्षित् means 'dwelling in the atmosphere' Under TS i 9 2 S says अन्तरिक्षशब्दः पृषोदरादिः। सर्वत्रागतिकः आद्युदात्तो इत्यादि। अगतिको मध्योदात्त पृषोदरादिरिति द्रष्टव्यम्। As the first member retains its independent accent, the word is to be included in the दासीभार group P vi 2 42 Neither क्षत nor अन्तरिक्ष is analysed in the Pada text

सूर्य आत्मा जगतस्तस्थुषश्च—this has become proverbial In vii 60 2 Surya is described as विश्वस्य स्थातुर्जगतश्च गोपा, cf vii 101 6 स रेतोधा वृषभः शश्वतीनां तस्मिन्नात्मा जगतस्तस्थुषश्च। तन्म ऋतं पातु शतशारदाय यूयं पात स्वस्तिभिः सदा नः॥ 'He is the impregnator bull of all, in him is the soul of all that moves and all that stands So may this rite protect me for a hundred autumns Do ye preserve us evermore with blessings'

सूर्य—from स्वर् light, cf Gk *helios* which became हेलि in late Skt In TS ii 2 10 4 सूर्य is derived from सुवीर्य त (i e इन्द्रम्) देवा अब्रुवन् सुवीर्यो मर्या यथा गोपायत इति। तत् सूर्यस्य सूर्यत्वम्। BD vii 128 says सूर्य सरति भूतेषु सु वीरयति तानि वा। सु ईर्यत्वात् चालयन् सर्वकार्याणि सन्दधत्॥ Samkara says in his com on BU v 15 सूर्य सुष्ठु ईरयत रसान् रश्मीन् गुणान् धियो वा जगत। Panini mentions सूर्य in the list of irregularly formed words with the suffix क्यप् His commentators state that the root is सृ or सू The close connexion with सूर्य of सविता as also passages like नूनं जनाः सूर्येण प्रसूताः RV vii 63 4 led to the belief that सूर्य might have come from √सू The सूर्यसिद्धान्त (xii 35) also mentions this popular derivation in the stanza हिरण्यगर्भो भगवानेषच्छन्दसि पठ्यते। आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते॥ (IC, April 1936 pp 615 6)

आत्मा—O E *æðm* breath *Cf.* Gk. *atmos* smoke, vapour Similarly the Gk word for 'soul' *pneuma* originally meant 'wind', 'air', 'breath' and Lat *animas* meaning 'rational soul' originally meant air, breeze' and is cognate with Skt *anilah* and Gk *anemos* In the Nirukta आत्मन् is derived from अत् or आप्,

आत्मा अतनेर्वा। आप्तेर्वा। अपि वाप्त इव स्यात्। Samkara in his com on AU. 1 1 says आत्मा आप्नोतेरत्तेर्वा which is explained by Anandagiri thus, व्याप्त्यर्थे, आदाने च सम्बन्धिनोति। तथाच स्मृति —

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिति।

यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते॥ इति।

जगत —lit. moving pr part of गा to go, hence the fem. is जगती. This was not recognised by Kātyāyana who framed the Vārttika द्युतिगमिजुहोतीनां द्वे च

तस्थुषः—Gen sing of तस्थिवस perf part of स्था, one of the very few perfect participles that have come down to classical Skt

2

| | |
|---|---|
| सूर्यो देवीमुषसं रोचमानां | सूर्यः। देवीम्। उषसम्। रोचमानाम्। |
| मर्यो न योषामभ्येति पश्चात्॥ | मर्यः। न। योषाम्। अभि। एति। पश्चात्॥ |
| यत्रा नरो देवयन्तो युगानि | यत्र। नरः। देवऽयन्तः। युगानि। |
| वितन्वते प्रति भद्राय भद्रम्॥२॥ | विऽतन्वते। प्रति। भद्राय। भद्रम्॥२॥ |

The sun follows the resplendent Goddess Usas, as a youth follows a young maiden, where pious men perform prayers and sacrifices to the auspicious (divinity) for their well being

सूर्यो देवीम् दानादिगुणयुक्तां रोचमानाम् दीप्यमानाम् उषसं पश्चादभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्यागच्छति। तत्र दृष्टान्तः—मर्यो न योषाम्। यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततमनुगच्छति तद्वत्। यत्र यस्यामुषसि जातायां देवयन्तः देवं द्योतमानं सूर्यं यष्टुमिच्छन्तो नरः यज्ञस्य नेतारो यजमानाः। युगानि। युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते यथा दर्शपूर्णमासावित्ति। अग्निहोत्रादीनि कर्माणि।

वितन्वते विस्तारयन्ति। यद्वा देवयन्तः देवयागार्थं धनमात्मन इच्छन्तो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयन्ति। तामुषसमनुगच्छतीत्यर्थः। एवंविधं भद्रम् कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय। स्तुम इति शेषः। यद्वा देवयन्तः देवकामा यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयन्ति। मर्यः। 'मृङ् प्राणत्यागे' [धा° ६।११९]। 'छन्दसि निष्टर्क्य'' इत्यादौ [३।१।१२३] यत्प्रत्ययान्तो निपात्यते। 'यतोऽनावः' [६।१।२१३] इत्याद्युदात्तत्वम्। युगानि। युजे कर्मणि घञ्। 'युगशब्दः कालविशेषे रथाद्युपकरणे च' इत्युञ्छादिषु [६।१।१६०ग] पाठाद् गुणाभावोऽन्तोदात्तत्वञ्च। वितन्वते। 'तनु विस्तारे' [धा° ८।१]। 'तनादिकृञ्भ्य उः' [३।१।७९]। 'सह°' [२।१।४] इति योगविभागात् तिङोपसर्गस्य समासे सति समासस्य' [६।१।२२३] इत्यन्तोदात्तत्वम्॥२॥

दैवीम्—see p 16 देवस्य पत्नी देवी। पुंयोगादाख्यायाम् [४।१।४८] इति ङीष्। S under III 20 5

उषसम्—also उषासम्, Av *usaonhəm* from वस to shine Skt *ucchati*, Av *usaiti* Cf Aeolic Gk *auos* (for *aus os) Lat *aur or a* (for* *ausos a*) Lith *auszra* red of dawn Skt वसन्त वासर and Eng *eas t* are cognate Gk *eos hrodo daktulos* 'rosy fingered dawn'

रोचमानाम्—pr part of रुच् to shine, root aor part रुचान ,

मर्यो—man, young man, wooer मर्यक—a little man, Middle Persian *merak*, Gk *meirax* boy, maiden मर्यो न योषाम्—cf वधूयुरिव योषणाम् III 52 3, वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता। मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिन्द्रम्। RV IV 20 5 "Him who is sung aloud by recent sages, like a ripe fruited tree, a scythe armed victor, I, like a bridegroom thinking of his consort, call hither Indra, him invoked of many"

योषाम्—The stem was originally योषन् (corresponding to वृषन्)

of which the Nom sing was योषा and the Nom pl योषणः (weak form for strong) The Acc sing ought to be योषणम् but it is not actually found[1] The Nom sing योषा coupled with the fact that the word meant 'young woman' gave rise to the idea that the stem ended in *a*, so that an *a* stem योषा, came into existence from which we have योषाम् (Acc sing) योषे योषाः On the other hand the Acc योषणम was turned into the fem योषणाम् and gave rise to the stem योषणा

'योषन् योषणा, योषा योषित् all denote 'young woman,' maiden,' as an object of affection, and as meet for wedlock So these terms are often opposed in the Brahmanas to वृषन् 'male', in the general sense of 'female', but they also occur in the sense of 'wife,' or 'daughter,' or merely 'girl' ' *Vedic Index* Vol II, p 196 'स्त्री is the ordinary word in poetry and prose for 'woman', without special reference to her as a wife or as a maiden नारी has the same sense but disappears in later prose, while ग्ना refers only to the wives of the gods and योषित्, with its cognate words denotes the young woman as ripe for marriage " *Ibid* p 485 Lat Juno is from the same root Under iii 52 3, iii 56 5, etc S says युष भजने इति सौत्रो धातुः Note that *yosa*, *yosan* and *yosana* are accented on the first syllable, while *yosit* is accented on the second

पश्चात्—Abl adv Av *pashat* O P *pasa'* The Inst *paśca* (Av *pasca* O P *pasa'*) is also used in RV पश्चात् with verbs of motion, governs the Acc अपरा पूर्वामभ्येति पश्चात् RV i 124 9 द्विपात् त्रिपादमभ्येति पश्चात् x 117 8 न न पश्चादघ नशत् ii 41 11 no sin shall reach us from behind यन्तं पश्चाच्छब्दोऽनुदेति BU ii 1 10 Such use though rare, is sometimes found in class Skt

The sense of *cd* is not quite clear Skandasvamin explains यत्र नरो मनुष्या देवयन्तः देवम् इमनेव स्य यष्टुमिच्छन्तः । युगानि वितन्वते । युगशब्दः

---

[1] In O P. the Inst sg in °आ and the Abl sg in °आत् fell together

कालवचनः सामर्थ्यादग्निहोत्रकालेषु वर्तते। प्रतीत्यनेन सम्बध्यते। अग्निहोत्रकालान् प्रति, अग्निहोत्रकालेषु [इति यावत्]। वितन्वते विततं कुर्वन्ति। भद्राय तत्फलाय। भद्रम् च अग्निहोत्रलक्षणं कर्म। यदा स्वेषु कालेषु मनुष्या अग्निहोत्रं जुह्वति तदा सूर्यं उदयम् पश्यादभ्येतीति समस्तार्थः।

Mādhava's explanation is as follows मनुष्या देवान् कामयमाना अग्निहोत्रादीनि कर्माणि प्रतिवितन्वते भद्रं च भद्राय कुर्वन्ति। यद्वा कर्षणार्थं युगानि युञ्जन्ति। भद्रम् here evidently means कल्याणमग्निहोत्रादिकम् कर्म and भद्राय means तत्फलाय

Hillebrandt understands प्रतिवितन्वत with भद्रम् and construes भद्र[1] (nom ) भद्राय प्रतिवितनुते—a happy generation spreads itself out against another happy generation (*breitet sich* ein gluckliches Geschlecht einem glucklichen *entgegen*) Oldenberg translates 'Where men revering God lay out the yoke of the offering (regarded as a vehicle or something like it) for the glorious (Surya) to the glorious' (*cf* प्रति वरम् )[2] Geldner translates 'When men devoted to God lay the yokes, ya a fortunate one, for the auspicious deed' He explains "With the laying of the yoke begins the day's work of the countryman *Yuga* 'yoke' here means day's work, epoch, time Every morning the pious begin a new epoch or a new day's work. The same imagery in x 101 3[3]. *Cf* also

[1] भद्रं युगं भद्राय युगाय

[2] Old ad is in a foot note Or is प्रति to be construed with वितन्वत and भद्रम् regarded as an adv ?

[3] युनक्त सीरा वि युगा तनुध्वम् x 101 3 'harness the ploughs, extend the yokes' We may add also x 101 4 सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् 'The poets harness the ploughs, they extend severally the yokes'. "In this (x 101 3) and the following stanzas sacrifice is figuratively spoken of as ploughing, sowing and reaping." GRIFFITH

1 113 16d[1] प्रति in the sense of constant repetition युगम् is to be understood after अहम् "

Griffith follows Ludwig and translates "Where pious men extend their generations, before the Auspicious One for happy fortune" with the note that it reminds one of Shelley's

> "Man, the imperial shape, then multiplied
> His generations under the pavilion
> Of the Sun's throne "—*Ode to Liberty*, ll 31 3

The clue to the sense of युगानि would, however, appear to be furnished by v 47 6 वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयन्ति 'for him, they spread out prayers and acts of worship, the mothers weave clothes for their son ' Thus in our stanza युगा means उभया, i e , धियः and अपांसि 'prayers and sacrifices '

यत्रा—metrical lengthening Av yaθra Panini s rule is ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् vi 3 133

नर —Nom pl of नृ Av nara, Gk aner, man Old Lat nero strong, neria bravery, Lat Nero The Acc sing naram was regarded as nara m and the a stem nara came to be fully declined Earlier नर was found only at the end of compounds

देवयन्त —Nom pl of the pr part of the denom देवय from देव Before the denom suff य a stems generally remain unchanged in RV नच्छन्दस्यपुत्रस्य P vii 4 35 For देव Panini has the rule देवसुम्नयोर्यजुषि काठके vii 4 38 (See P vii 4 35 39 ) With the suffix उ the form will be देवयु which also means

---

[1] उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति ।
आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥

Arise! the breath of life has come to us Darkness has disappeared and light is coming She has left a path for the Sun to travel We have arrived where men prolong their lifetime ' Geldner adds in a note "i e , where a new period of life, a new day begins "

'devoted to the gods.' देवयते। 'देवानात्मन इच्छति' इति देवयन्। तस्मै। 'क्याचि च' [७।४।३३] इतीत्वं न भवति, नच्छन्दस्यपुत्रस्य [७।४।३५] इति निषेधात्। "अश्वाघस्य०" [७।४।३७] इत्यात्वविधानादीत्वनिषेधे प्राप्तस्य दीर्घस्याप्येष निषेध इत्युक्तम्। 'शतुरनुमो नद्यजादी' [६।१।१७३] इति विभक्तेरुदात्तत्वम्। अत्र क्यचश्चित्त्वादन्तोदात्तत्वम्। अप पित्त्वादनुदात्तत्वम्, शतुश्च लसार्वधातुक-स्वरेण। उभयोः क्यचा सहैकादेशे 'एकादेश उदात्तेनोदात्तः' [८।२।५] इत्युदात्तत्वम्। तस्मादन्तोदात्तात् परस्या विभक्तेः "शतुरनुमो नद्यजादी" [६।१।१७३] इत्युदात्तत्वम्। S. under i 16. 12.

युगानि—We take युगानि here in the sense of उभयानि referring to धियः and अपांसि. Skt *yugá-m*, Lat. *jugu-m*, Gk. *zugo-n*, Eng. *yoke*. The word orig meant 'yoke,' then 'couple, pair', then a race of men, generation (because it is *united* by common descent) and then an age of the world (the sense is shifted to that of time.).

वितन्वते—तन् means to stretch. वि तन् to stretch out, to spread out, to carry out, perform, accomplish Skt. *tan*, Av. *tan*, Mod. Persian <u>tanidan</u> to spin, Lat *tenēre* to hold, *tendere* to stretch, to extend, Gk *teinein* (from *ten-jō) to stretch, strain, extend

प्रति भद्राय भद्रम्—may be construed in two ways भद्रं सूर्यं प्रति भद्राय or भद्र प्रति भद्राय सूर्याय If प्रति be taken with वितन्वते (as it is construed with अहृयत in प्रति भद्रा अहृयत गवा सर्गा न रश्मयः iv 52 5) भद्रम् will have to be taken as an adv For भद्र see p 38.

भद्रम्—भद्र is very aptly explained in the *Sātyāyana Brahmana*, यद्वै पुरुषस्य वित्तं तद् भद्रम्, गृहा भद्रम्, प्रजा भद्रम्, पशवो भद्रम् Later on धर्म, अर्थ, काम and मोक्ष were regarded as the four भद्र's (चतुर्भद्रम्). In the *Praśnottararatnamālika* (St. 27) the four *bhadras* are thus enumerated

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम्॥

It is interesting to note in this connexion that in

Bhavabhuti's prayer to the sun (Mal I. 5) also the word भद्र occurs twice

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते धुर्यां लक्ष्मीमिह मयि भृशं धेहि देव प्रसीद ।
यद्‌ यत्‌ पापं प्रतिजहि जगन्नाथ नमस्य तन्मे भद्रं भद्रं वितर भगवन्‌ भूयसे मङ्गलाय ॥

The advanced student is advised to read Mayurakavi's *Sūryasataka* and Panditaraja Jagannātha's *Sudhalahari* along with this hymn to the sun

3

| | |
|---|---|
| भद्रा अश्वा हरितः सूर्यस्य | भद्राः । अश्वाः । हरितः । सूर्यस्य । |
| चित्रा एतग्वा अनुमाद्यासः ॥ | चित्राः । एतऽग्वाः । अनुऽमाद्यासः ॥ |
| नमस्यन्तो दिव आ पृष्ठमस्थु: | नमस्यन्तः । दिवः । आ । पृष्ठम्‌ । अस्थुः । |
| परि द्यावापृथिवी यन्ति सद्यः ॥३॥ | परि । द्यावापृथिवी इति । यन्ति । सद्यः ॥३॥ |

The auspicious bay steeds of the sun, the brilliant *Etagvas* having been greeted with gladness have ascended the back of Heaven receiving the homage (of all) In one day they traverse Heaven and Earth

भद्राः कल्याणाः । अश्वा एतग्वा इत्येतदुभयमश्वनाम । तत्रैकं क्रियापरं योजनीयम्‌ । अश्वाः तुरगा व्यापनशीला वा हरितः हर्तारः चित्राः विचित्रावयवाः अनुमाद्यासः अनुक्रमेण सर्वैः स्तुत्या मादनीयाः । एवम्भूताः सूर्यस्य एतग्वाः अश्वाः । यद्वा एतं गन्तव्यं मार्गं गन्तारोऽश्वाः । एतं शबलवर्णं* वा प्राप्नुवन्तोऽश्वा नमस्यन्तः अस्माभिर्नमस्यमानाः सन्तो दिवः

* Peterson adds नीलवर्णं after शबलवर्णम्   One of M M 's MSS reads शबलवर्णं नीलवर्णं वा प्राप्नुवन्तोऽश्वा   In the com on TS II 8 7 1 एतग्वा is explained as श्वेता , श्वेता, as शीघ्रगामिन. and हरित as नीलवर्णा .  Under RV VII 70 2 S explains एतग्वा as श्वेतौ and under VIII 70 7 as एतवर्णौ श्वेतौ

अन्तरिक्षस्य पृष्ठम् उपरिप्रदेशं पूर्वभागलक्षणम् आ अस्थुः आतिष्ठन्ति प्राप्नुवन्ति। यद्वा हरितो रसहरणशीला रश्मयो भद्रादिलक्षणविशिष्टा दिवः पृष्ठं नभःस्थलम् आतिष्ठन्ति। आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव, एकेनाह्ना परियन्ति परितो गच्छन्ति; व्याप्नुवन्तीत्यर्थः। अश्वाः। 'अशू *व्याप्तौ' [धा° ५।१८]। 'अशिप्रुषि°'† [उ° १।१५१] इत्यादिना क्वन्। एतग्वाः। 'इण् गतौ' [धा° २।३५]। 'असिहसि°'‡ [उ° ३।८६] इत्यादिना कर्मणि तन्प्रत्ययः। गमेरौणादिको भावे डुप्रत्ययः। एतम् एतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अनुमाद्यासः। 'मदि स्तुतौ§' [धा° १।१३]।

---

* This is the reading in the *Ksiratarangini* and Durga's Dhatupātha Maitreya, Madhava and Bhattoji read अशू व्याप्तौ सङ्घाते च

† Ksirasvāmin, Ujjvaladatta, Bhaṭṭoji and others read अशूपुषि° Bhoja in his *Sarasvati-Kanthābharana* (ii 3 128) अशूप्रुषि°. The printed *Prakriya sarvasva* (i 140) reads अशुप्रषि° where प्र appears to be an error for प्रु

‡ Ksira, Ujj, Bhaṭṭoji and others read हसिमृग्रिण्वमि दमिलूपूधुर्विभ्यस्तन्. Bhoja, Narayana and others also exclude असि. Sayana, however, always quotes the rule with असि added at the beginning This reading is decidedly better, for though असि occurs in the Veda alone still the Unadisūtras take cognisance of many words which we find only in the Vedas at present

§ The root मन्द is read in the Dhatupatha as मदि स्तुतिमोदमदस्वप्न(कान्ति)गतिषु and S quotes the full rule under i 9 2, 10 11, 26 5 Under i 9 3 he says 'मदि स्तुति°' इत्यस्य, and under iii 47 4 मदि स्तुत्यादिष्वित्यस्य S appears to derive अनुमाद्य everywhere in RV. from this root, But then the form would be अनुमान्द्य and not अनुमाद्य. The difficulty can, however, be got over with the help of *paribhasa* 94 आगमशास्त्रमनित्यम् (see S under i 109 3, iii 47 4), etc In the com. on TB he says रथघोषेणम् अनु हृष्यन्त evidently deriving the word from मदी हर्षे Sk says मदतिरर्चनकर्मा। अनुष्टुत्या.

अस्माण्ण्यन्तात् 'अचो यत्' [३।१।९७]। 'यतोऽनाव॰' [६।१।२१३] इत्याद्युदात्तत्वम्। नमस्यन्त॰। 'नमोवरिव॰' [३।१।१९] इति पूजार्थे क्यच्। व्यत्ययेन कर्मणि शतृप्रत्यय॰। अस्थुः। तिष्ठतेश्छान्दसो वर्तमाने लुङ्। 'गातिस्था॰' [२।४।७७] इति सिचो लुक्। आत॰' [३।४।११०] इति झेर्जुस्॥३॥

भद्रा —श्रेयस is the comparative of भद्र, just as 'better' is the comp of 'good' in English and 'mieux' of 'bon' in French The *antonym of* भद्र *is* पाप कि स यजमानस्य पापभद्रमाद्रियेत य कामयेत पापीयान् स्यादिति य कामयेत श्रेयान् स्यादिति AB xı 7

हरितः —fallows, *cf* *Sakuntala* I भ्रतीव हरितो हरीव वर्तन्ते वाजिन। The *Brhaddevatā* (iv 140 142) following the *Nirukta* mentions the different steeds of different deities इन्द्रस्य हरयो ह्यश्वा अग्ने रयास्तु रोहित। सूर्यस्य हरितश्चैव वायोर्नियुत एव च॥ रासभ अश्विनोऽश्विभ्यामश्वा पूषण वाजिन। पृषत्योऽस्माक्तु मरुतां गावोऽरुण्यस्तथोषसाम्॥ सवितुर्वाजिन श्यावा विश्वरूपा बृहस्पते॥

एतग्वा —एत + ग्व going quickly swift एतग्व is also the name of the sun's horse (एत in the plural denotes the steeds of the Maruts) Av. *aetava* (<*ae ta gv a*) *eta* from इ 'to go' means darting, rushing swift, from I E *ai* or *ai* to burn to shine' means variegated, glittering, shining According to some scholars *étagva* means possessing shining cows, thence by लक्षणा, 'shining'

चन्द्रमादयास —√*mad*, orig to be wet, to drip then to be drunk, *then to rejoice*

नमस्यन्त —क्यच has been evidently added here acc to सुप आत्मन क्यच् and not acc. to नमोवरिवश्चित्रङ क्यच So the meaning appears to be desiring homage hence deriving homage Sayana takes the bull by the horn and says नमस्यन्त means नमस्यमाना, but when an active verb is used in the passive sense it takes *Ātm* terminations In his com on *TB* ii. 8 7 1 Sāyana says नमस्कारनिमित्त इव पूज्यभूता Can the correct reading be नमस्कारं कुर्वन्त इव पूज्यमाना ? Skandasvamin नमस्यन्त पूज्यमाना इत्यर्थ Venkata madhava merely says पूज्यमाना

7—1491 B.T

परि द्यावापृथिवी यन्ति सद्यः– *Cf.* iii. 58. 8 अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः। रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः॥ 'Aśvins, around you come viands abundant vying with hymns and not to be despised. Your car born of established order, urged on by press-stones, traverses heaven and earth in one day.'

सद्यः—is used here in its original sense 'on the same day', 'to-day.' It is used in classical Sanskrit in the secondary sense 'immediately'. The chariot of the Aśvins also परि द्यावापृथिवी याति सद्यः iii. 58. 8. सद्यः and सदिवः (to-day), श्वः (to-morrow), ह्यः (yesterday) etc. are formed with अस् (V.G.S., p. 213).

4

| | |
|---|---|
| तत् सूर्यस्य देवत्वं तन्महित्वं | तत्। सूर्यस्य। देवऽत्वम्। तत्। महिऽत्वम्। |
| मध्या कर्तोर्विततं सं जभार। | मध्या। कर्तोः। विऽततम्। सम्। जभार। |
| यदेदयुक्त हरितः सधस्थाद् | यदा। इत्। अयुक्त। हरितः। सधऽस्थात्। |
| आद्रात्री वासस्तनुते सिमस्मै॥४॥ | आत्। रात्री। वासः। तनुते। सिमस्मै॥४॥ |

This is the divinity, this the greatness of Sūrya that in the midst of the work he has withdrawn the spread out (web). As soon as he has yoked the bay steeds from their stall, Night spreads her garment over all or "still spreads around her garment for him."

सूर्यस्य *सर्वप्रेरकस्यादित्यस्य तद् देवत्वम् ईश्वरत्वं स्वातन्त्र्यमिति यावत्। महित्वम् महत्त्वं माहात्म्यञ्च तदेव। तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। यत् कर्तोः। कर्मनामैतत्। आरब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणो मध्या

* Some MSS. read सर्वस्य प्रेरकस्य which is also found under the next stanza. But in that case too many स sounds come together.

मध्ये, अपरिसमाप्त एव तस्मिन् कर्मणि, विततम् विस्तीर्णं स्वकीयं रश्मिजालम् अस्तं गच्छन् सूर्यः संजभार अस्माल्लोकात् स्वात्मन्युपसंहरति।[1] कर्मकरश्च प्रवृत्तं *कर्मापरिसमाप्तमेव विसृजत्यस्तं यान्तं सूर्यं दृष्ट्वा। ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति? न कस्यापि। सूर्य एवेदृशं स्वातन्त्र्यं महिमानं चावगाहते। अपि च। इदित्यवधारणे। यदा इत् यस्मिन्नेव काले हरितः रसहरणशीलान् स्वरश्मीन् हरिद्वर्णानश्वान् वा सधस्थात् सहस्थानात्, अस्मात् पार्थिवाल्लोकात्, आदाय अयुक्त अन्यत्र संयुक्तान् करोति। यद्वा, युजिः केवलोऽपि विपूर्वार्थो† द्रष्टव्यः[2]। यदैवासौ स्वरश्मीन् अश्वान् वा सधस्थात्

---

[1] मध्या मध्ये कर्तोः ··· कृष्यादिकर्मणः। अपरिसमाप्तेष्वेव प्रारब्धेषु कर्मस्वित्यर्थः। विततमात्मीयं रश्मिजालं सञ्जभार। Sk. मध्ये कर्मण विततं तत् कर्माणि यन्त सूर्यं दृष्ट्वा कर्मकरः संहरति V. M.; S. combines both views. महत्त्वादीदमन्यस्तदुदय-संहर नान्य. सूर्यात् चर्मनैकैव संहर्तुं शक्नोति। Sk मध्ये यत् कर्मणां क्रियमाणानां देवासुरमनुष्यसम्बन्धिनाम्। विततं रश्मिजालम्, अहर्लक्षणम्। संजभार। अयमेव संहरति, नान्य एतन्निसु शक्नोति नोपसंहर्तुम् इत्यभिप्रायः। Uvata. सूर्यस्य तद् देवत्वं देवतानुभावः। तत्र महाभाग्यम् ऐश्वर्यम्। तत् किम्? कर्तोः। 'ईश्वरे तोसुन्कसुनौ' [३।४।१३] इति करोतेस्तोसुन्-प्रत्ययः। कार्यमेतस्य जगद्रूपम्। Mahidhara. सूर्यरश्मिसद्भावे सति तदीयप्रकाशेनानुगृहीता मनुष्याः सर्वेषु देशेषु बहुविधानि कृष्यादिकर्माण्यारभन्ते, सदा यामचतुष्टयभावश्च सर्वं रश्मिजालं संहृत्यास्तमेति। यतो रश्मिजालस्य जगत्प्रकाशनाय क्षणमात्रेण प्रसारणं पुनः संहरणं च नाल्पमहिम्न सम्भवति, अतो महदेतन्माहात्म्यम्। S on TB ii 8. 7. 1

* कर्म dropped in most MSS

† विपूर्वो—M. P. But under i 105. 11 वि सेधन्ति पथो वृकम् S. says, षिधु गत्याम्। अयं केवलोऽपि निपूर्वार्थो द्रष्टव्यः। Similarly under vi 29. 5 न ते अन्त शवसो धाय्यस्य he says अत्र केवलोऽपि दधातिरवपूर्वार्थो द्रष्टव्यः. Again under vii. 104. 2 तपुर्यस्तु चरुरग्निवा इव he remarks: यसु। यसु प्रयत्ने। केवलोऽप्ययमाङ्पूर्वार्थो द्रष्टव्यः. Similarly under vii. 100. 1 he says दयतिराङ्पूर्वार्थो द्रष्टव्यः and under i. 70. 9: *हृञ् हरणे। केवलोऽपि सोपसर्गार्थो द्रष्टव्यः।

[2] We find the same thing in classical Sanskrit. In *Kirāt.* i. 1 प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् commentators maintain that

सह तिष्ठन्त्यस्मिन्निति सधस्थो रथ । तस्मात् अयुक्त अमुञ्चत्* । आत् अनन्तरमेव रात्री निशा वास, आच्छादयित्री तम सिमस्मै । सिमशब्द-सर्वशब्द-पर्यायः । सप्तम्यर्थे चतुर्थी । सर्वस्मिन् लोके । तनुते विस्तारयति¹ । यद्वा वासो वासरम् अह, तत् सर्वस्मादस्माल्लोकादपनीय रात्री तमस्तनुते । अत्र निरुक्तम्—'तत् सूर्यस्य देवत्व तन्महित्व मध्ये यत् कर्मणां क्रियमाणानां वितत सहियते, यदासावयुङ्क्त† हरणान् आदित्य-रश्मीन् हरितोऽश्वानिति वा अथ रात्री वासस्तनुते सिमस्मै ‡'वासरमहरवयुवती

---

अयुङ्क्त has been used for अयुङ्क्त see *Kiratarjuniya* I (ed by K C Chatterjee) p 4 N B 1

* P notes three MSS read अमुञ्चत्—a very good reading

¹ कदा पुनरुपसंहार ? उच्यते । यदेदयुक्त इत्छब्द पादपूरण । यदास्मया नन्तरम् उत्तरया मेव गन्तु युङ्क्ते । हरित स्वानश्वान । क ? उच्यते सह तिष्ठन्ति यत्रास्मा स सधस्थो रथ इहाभिप्रेत । सप्तम्यर्थे चैपा पञ्चमी । सर्वेषामश्वाना सहस्थानभूत आत्मीये रथ इत्यर्थ । आत् तदैव च रात्री वास । वास शब्दोऽत्र क्रियाशब्दो वस आच्छादन इत्यस्य । वस्त्रवचनो वा । सामर्थ्याच्च क्षपा वाम आह नान्यत् । तत्सारूप्याच्च तमसि प्रयुज्यते । सर्वस्य जगत आच्छादयित्री क्षपावास सरूप वा तम । Sk किञ्च यदत् अयुक्त यदा प्रयुङ्क्ते आकृति आत्मनश्वान् करोति । हरित हरिद्वर्णान् रश्मीन् । त ह्यस्तमनकाले लोहितता यन्ति । सधस्थात् सहस्थानादाहृत्य । पृथिव्यादिलोकत्रय तेषां सहस्थानम् । तत्र हि ते निपतन्ति । अगत्यकत्वादित्यसहित ज्योतिरेकत्र तत आदित्यप्रभावात् प्रभवतीत्यभिप्राय । Uvata on VS 33 37 सह तिष्ठन्त्यश्वो यत्र तत् सधस्थ व्योममण्डलम् । मध्याकाशे पीतवर्णानश्वान् यदा व्योममण्डलात् स्वस्मिन् योजयति, अनन्तरमेव निशा सर्व वस्तु तमसाच्छादयति । Mahidhara यदत् यदैव सधस्थात् कर्मानुष्ठातृणां सहावस्थान योग्याद्भूप्रदेशात् निष्क्रमतीत्य रश्मु हरित स्वकीयानश्वान् अयुक्त सूर्य स्वरथ योजयति आत् अनन्तरमेव सिमस्मै सर्वस्मै प्राणिजाताय तत्प्रकाशार्थं रात्री वासस्तनुते लोकप्रसिद्ध रात्रिनिर्माण करोति । अयमर्थ—मेरु प्रदक्षिणीकुर्वन्नादित्यो यदैवास्माद्भूप्रदेशादपरत्र रश्मीनुपसंहरत्येव रात्रिरायाति । S under TB 2 8 7 2

† अयुक्त M P. ‡ वसरम्—Some MSS of Nir

(both trans and intrans) Skt and Beng रिष्ट and रिष्टि are also derived from this रिष Bengali रिष is, however, a corruption of ईर्ष्या रिष्यति and व्यथते are often used side by side न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति। नास्य राय उपदस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ॥ RV v 54 7, स वै दिव प्राणो य. सञ्चरंश्चासञ्चरंश्च न व्यथते, अथो न रिष्यति। BU i 5 20

नो—न उ, and not, प्रगृह्य acc to ओत् 1 1 15 hence इति in Pp
व्यथते—see p 161

4

| | |
|---|---|
| यो अस्मै हविषाविध- | यः \| अस्मै \| हविषा \| अविधत् \| |
| न तं पूषापि मृष्यते। | न \| तम् \| पूषा \| अपि \| मृष्यते। |
| प्रथमो विन्दते वसु ॥४॥ | प्रथमः \| विन्दते \| वसु ॥४॥ |

Pusan (*Pusa*) forgets not him (*na tam api mrsyate*) who (*yah*) offers him worship (*asmai avidhat*) with oblation (*havisa*), he is the first who (*prathamah*) acquires (*vindate*) wealth (*vasu*)

यः यजमानः अस्मै पूष्णे हविषा चरुपुरोडाशादिना अविधत् परिचरति तं यजमानं पूषा न अपिमृष्यते। अपिशब्द ईषदर्थे। ईषदपि न हिनस्ति।— स च प्रथमः मुख्यः सन् वसु धनं विन्दते लभते ॥४॥

अस्मै—For loss of accent see p 123

अविधत्—See p 121, accented in connexion with यः

मृष्यते—The root मृष् is read in the Dhātupātha as मृष तितिक्षायाम्. Hence Indian commentators find it difficult to assign any other meaning to the root The original meaning appears to be 'to forget', then '(like Eng not mind)' it came to mean to disregard, to bear patiently, then to pardon, to forgive

Pāṇini's rule मृषस्तितिक्षायाम् i. 2. 20 clearly shows that patient endurance is only one of the senses of मृष्. Skandasvāmin while explaining i. 71. 10 मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् says मर्षिष्ठा सामर्थ्याद्विस्मरणार्थः। On viii. 18. 21 न ते भोजस्य सख्यं मृषन्त S. says: भोजस्य भोजकस्य पालकस्य ते तव सख्यं सख्युः कर्म स्तोत्रं यजनं वा न मृषन्त न विस्मरन्ति। 'मृष मर्षे'। मर्षो मर्षणम्। तत्र कुर्वन्तीत्यर्थः। यतो न विस्मरन्ति, etc.

मृषा is derived from this root, meaning literally through forgetfulness, hence in vain, hence untruthfully.

अपि मृष्यते—Acc. to western scholars अपि मृष् is to be taken together in the sense of 'to forget', 'to neglect.' Cf. RV. iii. 33. 8 एतद्वचो जरितर्मापि मृष्ठाः 'This word, O singer, thou shalt not forget.'

5

| | |
|---|---|
| पूषा गा अन्वेतु नः | पूषा । गाः । अनु । एतु । नः । |
| पूषा रक्षत्वर्वतः । | पूषा । रक्षतु । अर्वतः । |
| पूषा वाजं सनोतु नः ॥५॥ | पूषा । वाजम् । सनोतु । नः ॥५॥ |

Let Pūsan (*Pūsā*) go after, i e, escort (*ánu etu*) our cows (*gā́ḥ*), let Pūsan (*Pūsā*) protect (*rakṣatu*) our horses (*arvataḥ*), let Pūsan (*Pūsā́*) win (*sanotu*) booty (*vā́jam*) for us (*naḥ*).

पूषा पोषको देवो नः अस्मदीया गाः अन्वेतु रक्षणार्थमनुगच्छतु। स च पूषा अर्वतः अश्वान् रक्षतु चोरेभ्यः। तथा वाजम् अन्नं च नः अस्मभ्यं पूषा सनोतु प्रयच्छतु ॥५॥

अर्वतः—अर्वा is read in the *Nighantu* in the list of words denoting 'horse' and is explained in the *Nirukta* (x. 31) as ईरणवान् (उदकेरणक्रियायोगी D.) The stem *ár-vant* is evidently derived from ऋ to go and literally means 'speeding'; cf. Av. *aurvant* 'quick'.

Acc to Sanskrit grammar the stem is अर्वन्, cf P 6 4 127 अर्वणस्त्रसावनञः In the Vedas, the Nom sing is generally अर्वा, अर्वान् (from वत् stem) occurring only twice अर्वाणम् occurs only once in RV. x 46 5 and the Voc. pl अर्वाण is found once in AV xviii 3 19 In classical Skt the वत् forms become unusual so that the Varttikakāra says अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्॥

वाज सनोतु—Western scholars take वाज in the sense of booty' and सन् in the sense of 'winning' Indian commentators, following the *Nighantu*, take वाज in the sense of अन्न and following the Paniniya Dhatupatha take सन in the sense of giving Cf ii 25 2 अग्नि सनोति वीर्याणि विद्वान् सनोति वाजम्, iv 17 9 अध वाज भरति य सनोति He brings home the booty which he wins, vi 60 1 श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् He who worships Indra and Agni the all powerful kills his enemies and wins booty

6

| | |
|---|---|
| पूषन्ननु प्र गा इहि | पूषन् । अनु । प्र । गाः । इहि । |
| यजमानस्य सुन्वत । | यजमानस्य । सुन्वतः । |
| अस्माक स्तुवतामुत ॥६॥ | अस्माकम् । स्तुवताम् । उत ॥६॥ |

O Pusan (*Pusan*) go forth (*pra ihi*) after the cows (*gah anu*) of the worshipper (*yajamanasya*) that presses Soma (*sunvatah*) and (*uta*) of us (*asmakam*) that praise thee (*stuvatam*)

हे पूषन्, सुन्वत सोमाभिषवं कुर्वतो यजमानस्य गाः पशून् अनुप्रेहि रक्षणार्थम् अनुगच्छ। उत अपि च स्तुवताम् त्वद्विषयं स्तोत्रं कुर्वताम् अस्माकं गाश्चानुगच्छ ॥६॥

7

| | |
|---|---|
| माकिर्नेशन्माकीं रिष- | माकिः । नेशत् । माकीम् । रिषत् । |
| न्माकीं सं शारि केवटे । | माकीम् । सम् । शारि । केवटे । |
| अथारिष्टाभिरा गहि ॥७॥ | अथ । अरिष्टाभि । आ । गहि ॥७॥ |

Let none be lost (*ma kih néśat*), let none be hurt (*ma kim risat*) let none be crushed (*mā kim sám śari*) in a pit (*kevaṭe*)· but (*atha*) come (*a' gahi*) with them unharmed (*dristabhih*)

हे पूषन्, अस्मदीय गोधन माकि. नेशत् मा नश्यतु । माकिर्माकीमित्येतौ प्रतिषेधमार्थे वर्तेते । माकीं रिषत् मा व्याघ्रादिभिर्हिंसताम् । माकीम् मा च केवटे कूपे संशारि संशीर्णं भूत् कूपपातेनापि हिंसित मा भवतु । अथ एव सति अरिष्टाभि. अहिंसिताभिर्गोभि' सह आगहि सायकाल आगच्छ ॥७॥

माकि —In the declension of what is known in Sanskrit Grammar as किम् शब्द, two stems have fallen together In the Nom Acc. sing neut we find किम् in classical Sanskr t and the rest are formed from क But in RV we find the interrogative कि used once as the Nom sing, masc कय यो धोता किस स x 52 3 and the indefinite माकि (Gk *me tis*) no one, never' and नकि no one' 'nothing ' Av *ciś* Gk *tis*, Lat *quis* This कि is retained in the Gen sing of the *Prakrits* (किस, कौस) though it is not found in Sanskrit माकि is used in prohibitive sentences with the injunctive (V G S, p 240)

नकि, माकि *and* नकीम् *along with* माकीम् etc are read in *Nighantu* III 12

नेशत्—3 sing reduplicated aorist injunctive of नश to be lost (नश अदर्शने) The ए here like the औ in नौषत्, is the result of con traction in reduplication V G S p 175 2 In classical Skt also the aorist is optionally नेशत् acc to several grammarians नशिमन्योरलिट्येत्वम् *Mbh* vi 4 120

माकीम्—(Gathic Av cim, younger Av cim with the negative particles nae, naeδa, ma māδa) probably the Acc sing of माकि with lengthened vowel Like माकि it is used in prohibitive sentences with the injunctive (*Vedic Grammar*, p. 430) नकीम् and माकीम् are preserved in Pr णाइं and माइं (घय णाइं मजये। माइं माएँ Hc viii. 2 190 1)

रिषत्—3 sing a aorist injunctive of रिष्

शारि—3 sing aorist injunctive passive of शॄ to crush, *cf* SB i 7 3 19 स पतित्वा वाइमपि शये

केवटे—*kevata* (Gr *kaiata*) is read in the *Nighaṇṭu* in the list of names of कूप

अथ—the later form of अध It may generally be translated by (*and*) *then* (*and*) *so*, when there is a contrast, especially after a negative, it is equivalent to *but* (V G S, p 214)

अरिष्टाभि—Uninjured *cf* अरिष्ट सर्व एधते RV i 41 2 By a curious irony of fate रिष्ट came to signify good luck (रिष्टताति—auspicious) and अरिष्ट came to mean fatal 'disastrous' in later Sanskrit

8

| | |
|---|---|
| शृण्वन्तं पूषणं वय | शृण्वन्तम् । पूषणम् वयम् |
| मिर्यमनष्टवेदसम् । | इर्यम् । अनष्टऽवेदसम् । |
| ईशानं राय ईमहे ॥८॥ | ईशानम् । राय । ईमहे ॥८॥ |

We approach (*vayam imahe*) Pusan who listens (*śrṇvantam Pusaṇam*), who is watchful (*iryam*) whose property is never lost (*anaṣṭavedasam*) who lords it over wealth (*rayah iśanam*)

अस्मत्स्तोत्राणि शृण्वन्तम् इर्यम् दारिद्र्यस्य प्रेरकम् अनष्टवेदसम् अविनष्टधनम् ईशानम् सर्वस्येश्वरम् एवविध पूषण देव वय राय धनानि ईमहे याचामहे ॥८॥

स्यंम्—(from स्य to set oneself in motion) watchful - Sayana sometimes explains it as प्रेरक, sometimes he identifies it with स्वं and explains it as स्वामी, ईश्वर

अनष्टवेदसम्—बहुव्रीहि of अनष्ट not lost and वेदम् (cf वित्त) property पूषन् is called अनष्टपशु in x 17 3 वेदस् is read in the *Nighantu* in the list of धननाम

राय —Three constructions are possible here (i) राय may be regarded as an obj Genitive governed by the participle ईशानम्, cf. ईशान वार्याणाम् i 5 2, i 24 3, तमीशान जगतस्तुषस्पतिम् i 89 5, ईशान राधसो मह vi 55 2, तमीशान वस्व vii 6 4, ईशानमिन्द्र सौभगस्य भूरे vii 21 8, ईशानमस्य जगत स्वर्दृशमीशानमिन्द्र तस्थुष vii 32 22, (ii) it may be regarded as the direct object of ईमहे ईशानम् being construed as an adjective to the indirect object तम् ईशानम is used without any obj gen in इन्द्रमीशानमोजसा i 11 8 क ईशान न याचिषत् viii 1 20 and ईमहे governs two objects in राय सखायमीमहे vi 55 2 (iii) राय ईमहे may be analysed as राये ईमहे (this is, of course, against the Pada text) and राय regarded as a final Dative as in तमित सखित्व ईमहे त राये त सुवीर्ये i 10 6 Note that the Nom pl *rayah* is accented on the first syllable while the Acc pl as also the Abl Gen sing is accented on the second अभिदमुपदाधपुरुरैव्य ६।१।१० ईशान राय ईमहे also occurs in त्वष्टर्गामातर वयमीशान राय ईमहे viii 26 22, तमिन्द्र दानमीमहे शवसानमभीर्वम्। ईशान राय ईमहे viii 46 6.

ईमहे—is read in the *Nighantu* in the list of roots meaning याचञा ई means 'to go' (p 136), to approach with prayers, to beseech, to solicit to gain

9

पूषन्त्सव व्रते वय
न रिष्येम कदा चन।
स्तोतारस्त इह स्मसि ॥९॥

पूषन् तव । व्रते । वयम् ।
न । रिष्येम । कदा । चन ।
स्तोतार । ते । इह । स्मसि ॥९॥

O, Pūsan (*Pū́ṣan*), [abiding] in thy ordinance (*tava vraté*) may we never be injured (*kádā caná vayam ná riṣyema*). We are thy praisers (*te stotā́raḥ smasi*) here (*ihá*)

चातुर्मास्येषु वैश्वदेवे पर्वणि पौष्णस्य हविषः 'पूषन् तव व्रते' इत्येषानुवाक्या ।[1] सूत्रितञ्च—'वाममद्य सवितर्वाममु श्वः पूषन् तव व्रते वयम्' [आ° २।१६।१६] इति ॥

हे पूषन्[2] पोषक [देव], तव त्वदीये व्रते कर्मणि वर्तमाना वयं कदा चन कदाचिदपि न रिष्येम हिंसिता न भवेम । तादृशाश्च वयम् इह अस्मिन् कर्मणि ते तव स्तोतारः स्मसि स्मः भवामः ॥९॥

पूषन् तव—class. पूषंस्तव, but in RV. final न् usually remains unchanged before त. The cases where the न् is changed into अनुस्वार and स् is inserted are mentioned in RP. iv. 76: तांस्त्वं सर्वांस्तान् देवांस्त्वं तांस्त्वायस्त्वांदस्त्व च

व्रते—from वृ 'to will' 'to choose', means will, ordinance. In the *Nighanṭu* the word is read in the list of कर्मनाम. व्रतमिति कर्मनाम वृणोतीति सतः । *Nir* ii 13.

ते—Since स्तोतारः is accented on the suffix it is construed with the Genitive *Cf* दस्योर्हन्ता ii 12 10, अपां नेता ii. 12. 7 See p. 199.

स्मसि—O Pers *a mahy*, Av. *mahi*. The 1st plural ending *-masi* is five times as common as *mas* in RV. It became altogether obsolete in classical Skt, but its Ātm. counterpart *-mase* is found in Pāli *mahe*.

---

[1] वैश्वदेव-वरुणप्रघास-साकमेध शुनासीरीयाख्य-पर्वचतुष्टयात्मकानि चातुर्मास्यानि कर्माणि । तेषां वसन्ते फाल्गुन्यां पौर्णमास्यां वैश्वदेवमुखेन प्रारम्भो भवति । वर्षास्वाषाढ्यां पूर्णिमायां वरुणप्रघासा अनुष्ठीयन्ते । शरदि कार्त्तिक्यां पौर्णमास्यां तत्पूर्वदिने च साकमेधाः सम्पाद्यन्ते । साकमेधानन्तरं च तत्कालमेव शुनासीरीयमनुष्ठेयम् । एवञ्च प्रायेण प्रतिचतुर्मासं कर्मणां प्रवृत्ते 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन 'चातुर्मास्य'व्यपदेशः । तत्र प्राथमिके वैश्वदेवपर्वणि आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रोऽष्टाकपालो द्वादशकपालो वा पुरोडाशः, सारस्वतश्चरुः, पौष्णः पैष्टश्चरुः, मरुतां सप्तकपालः पुरोडाशः वैश्वदेवी पयस्या, द्यावापृथिवीय एककपाल इत्यष्टौ हवींषि । तत्र पैष्टेन चरुणा यः पूष्णो यागस्तत्र चरुयागकाले पूषन्नवेत्याद्युचारणीया ।

[2] हे पूषन् जगत्पोषक पृथिव्यभिमानिदेव S under i. 42 1

10

परि पूषा परस्ता-
द्धस्तं दधातु दक्षिणम् ।
पुनर्नो नष्टमाजतु ॥१०॥

परि । पूषा । परस्तात् ।
हस्तम् । दधातु । दक्षिणम् ।
पुनः । नः । नष्टम् । आ । अजतु ॥१०॥

Let Pūsan (*Pūsa*) stretch out (*pari dadhatu*) his right hand (*daksinam hastam*) from afar (*parastat*) Let him drive back (*punah ā ajatu*) to us (*nah*) what has been lost (*nastam*)

पूषा पोषको देवः परस्तात् परस्मिन् देशे सुसञ्चारादन्यस्मिन् चोरव्याघ्रादिभिरुपेते देशे गच्छतो गोधनस्य निवारणाय स्वकीयं दक्षिणं हस्तं परिदधातु परिधानं निवारकं करोतु । नः अस्मदीयं नष्टम् च गोधनं पुनः आजतु आगच्छतु । आगमयतु* ॥१०॥

परिदधातु—(परि means 'around' and धा 'to set', "to lay or put or place or set round "

अजतु—The root अज् is read in the Dhatupatha as अज गतिक्षेपणयोः where क्षेपण would appear to mean 'to drive Hence the goad for driving cattle is known as प्राजन (*cf* Beng পাচন বাড়ী) Av *azaiti* to drive, to lead away Lat *ago* to lead, to drive Gk *agō* to lead Indian commentators generally regard the root as अन्तर्णीतण्यर्थ in the sense of 'to drive ' The root is generally used of cattle, *cf* यो गा उदाजदपधा बलस्य ii 12 1, hence it is clear that by नष्टम् here cows are meant (विनिष्टानामस्मदीयानां विनष्टप्रतिपत्तौ), *cf* i 23 13 आजा नष्टं यथा पशुम् ("अजिरन्तर्णीतण्यर्थः । यथा नष्टमजं गां वा स्वमेवागमयति, पशूनां रक्षितृत्वात्" Sk )

---

* Peterson notes that आगमयतु is not found in the Ulwar MS., but all the MSS collated by M and P show it and S often gives the primary meaning first and then the secondary meaning without इत्यर्थः or इति यावत् after it

## *YAMA*

### *Characteristic features*

"Yama is the son of Vivasvant and of Saranyū, the immortal daughter of Tvastr. He is elsewhere said to have been one of an original pair of human beings (x 10. 2), and to have sprung from the Gandharva, a deity of the atmosphere, and his wife (x. 10. 4). He was the first of mortals who died, and discovered the way to the other world, he guides other men thither, and assembles them in a home, which is secured to them for ever (x. 14. 1, 2) In one place he is represented as carousing with the gods under a leafy tree (यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः x. 135. 6) He is a king, and dwells in celestial light, in the innermost sanctuary of heaven (x 14. 3, 7,8) where the departed behold him associated in blessedness with Varuna. He grants luminous abodes in heaven to the pious (x. 14. 9) who dwell with him in festive enjoyment

"The Fathers who have attained to the heavenly state are described as being objects of adoration to their descendants. They are said to be of different classes, upper, intermediate and lower. Their different races are mentioned by name, *viz.*, Angirases, Vairūpas, Navagvas, Atharvans, Bhrgus, Vasisthas, etc Though not all known to their worshippers they are known to Agni Their descendants offer them worship and oblations (x. 15 2, 9), supplicate their good will (x. 14. 6), deprecate their wrath on account of any offences which may have been committed against them (x. 15 6), entreat them to hear, intercede for, and protect their votaries (x. 15. 5), and to bestow upon them opulence, long life and offspring. They

are represented as thirsting for the libations prepared for them on earth (x. 15. 9), and they are invited to come with Yama, his father Vivasvant and Agni, and feast with avidity, and to their hearts' content, on the sacrificial food."[1]

"Whether the flames devour the body or the earth cover it, the spirit, freed from all needs, moves through the air toward new life; led by Pūṣan, it crosses the stream and passes by Yama's watchful dogs to the world of spirits from which it came. ... In the highest heaven, in Yama's...bright realm beams unfading light, and those eternal waters spring ; there wish and desire and yearning are stilled ; there dwell bliss, delight, joy and happiness." (KAEGI, pp. 69 70)

Yama (lit. a twin) was so called because he and Yamī were twins even as Yima and Yime are twins in the Avesta The *Bṛhaddevatā* says.

अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह ।
स वै सरण्यूं प्रायच्छत स्वयमेव विवस्वते ॥
ततः सरण्व्यां जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यां तु वै यमः ॥ vi. 162 63

"Tvaṣṭṛ had twin children, Saraṇyū as well as Triśiras He himself gave Saraṇyū in marriage to Vivasvat Then Yama and Yamī were begotten on Saraṇyū by Vivasvat. And these two also were twins but the elder of the two was Yama" (MACDONELL ) This is based on *Nirukta* xii 10 त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद् यमौ मिथुनौ जनयाञ्चकार

In the *Nirukta* यम is derived from यम् 'to restrain': यमो यच्छतीति सतः x. 20 (यच्छति उपरमयति जीवितात् सर्वं भूतग्राममिति यमः । D.)

[1] MUIR, *Sanskrit Texts*, V.

## Hymn No. 8

## YAMA

x. 14

म० १०. सू० १४

वैवस्वतो यम ऋषिः। यमो देवता। ६—लिङ्गोक्ता देवताः। ७-९ लिङ्गोक्ता देवताः, पितरो वा। १०-१२—सरमापुत्रौ श्वानौ देवते। १-११—त्रिष्टुप् छन्दः, १३,१४,१६—अनुष्टुप्; १५-बृहती।

1

| | |
|---|---|
| परेयिवांसं प्रवतो महीरनु | परेयिऽवांसम् । प्रऽवतः । महीः । अनु |
| बहुभ्यः पन्थामनुपस्पशानम्। | बहुऽभ्यः । पन्थाम् अनुऽपस्पशानम्। |
| वैवस्वतं सङ्गमनं जनानां | वैवस्वतम् । सम्ऽगमनम् । जनानाम्। |
| यमं राजानं हविषा दुवस्य ॥१॥ | यमम् । राजानम् हविषा दुवस्य ॥१॥ |

He that hath departed (*pareyivā́msam*) towards (*ánu*) the great (*mahī́h*) slopes (*pravátah*) and hath spied out (*anu-paspaśānám*) a path (*pánthām*) for many (*bahúbhyah*), him the son of Vivasvant (*Vaivasvatám*), the assembler of peoples (*jánānām saṅgámanam*), Yama the King (*Yamám rā́jānam*) worship (*duvasya*) with oblation (*havíṣā*).

'परेयिवांसम्' इति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम्। 'अङ्गिरसो नः पितरो नवग्वा' इति षष्ठ्या अङ्गिरःपितृअथर्वभृगुलक्षणा लिङ्गोक्ता देवताः। 'प्रेहि' इत्याद्याभिस्तिस्रो लिङ्गोक्तदेवताकाः पितृदेवताका वा। 'अति द्रव सारमेयौ' इत्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गाभिरक्षितारौ स्थितौ

तद्देवताः । शिष्टा यमदेवत्याः । 'यमाय सोमम्' इति त्रयोदशाद्या अनुष्टुभः । 'यमाय मधुमत्तमम्' इत्येषा बृहती । आदितो द्वादश त्रिष्टुभः । तथा चानुक्रान्तम् —'परेयिवांसं षोळश यमो यामं षष्ठी लिङ्गोक्तदेवता पराश्च तिस्रः द्विश्या वा तृचः श्वभ्यां परा अनुष्टुभो बृहत्युपान्त्या'[1] इति । गतः सूक्तविनियोगः[2] । महापितृयज्ञे यमयागे आद्या याज्या[3] । सूत्रितञ्च—'इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु' [आ° २।१९।२२] इति ।

---

1 ''षष्ठी लिङ्गोक्तदेवता । लिङ्गोक्ता यामाङ्गिर पितृथर्वभृगव । अत पराश्च तिस्रो लिङ्गोक्त देवता । वेति लिङ्गोक्तदेवत्या पितृदेवत्या वा । अथ तृच । श्वानौ सरमापुत्रौ जनमार्गं अभित स्थितौ स्तौति । श्वभ्यामिति तादर्थ्ये चतुर्थी ।' इति षड्गुरुशिष्य । तथा च बृहद्देवता । 'परेयिवांसमित्यत्र स्तूयते मध्यमो यम अथर्वाणोऽथ भृगवोऽङ्गिरस पितर सह । षष्ठ्यां देवगणास्तत्र संस्तूयन्ते त्रुभत्रय: ॥ पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यम । मन्त्रेषु बहुश पादे 'विवस्वन्त' पिता हि स ॥ सखायमेतसंयुक्तं पितृभि स्तूयते यम । प्रेहि प्रेहीति तिस्रश्च प्रेता श्रेष उदाहृता ॥ पितृणा हि पतिर्देवो यमस्तस्मात् स सूक्तभाक् । अतिद्रव तृचे श्वानौ पर पितरमुदीरताम् ॥ ६।१५५-१५९ ।

2 दशमण्डलगतानां बहूनां सूक्तानां विनियोग श्रौतसूत्रादिषु नोपलभ्यते । प्रातरनुवाके प्रातरनुवाकन्यायेन चाश्विनशस्त्रे सुबहूनां सूक्तानां शसनस्य विधानात् येषां विनियोगो विनिर्दिष्टो नोक्तस्तेषां तत्रैव विनियोगो बोद्धव्य । एतच्च दशममण्डलगत प्रथमसूक्तस्य भाष्योक्त प्रकारेणावगम्यते ।

3 'चातुर्मास्ययागे साकमेधनामके पर्वणि अनीकवान् अग्नि सान्तपना मरुत, गृहमेधिना मरुत इन्द्र, अग्नि, सोम, सविता, सरस्वती, पूषा क्रीडिनो मरुत, अग्नि, सोम सविता, सरस्वती, पूषा इन्द्राग्नी, इन्द्रो महेन्द्रो वा विश्वकर्मा चेति देवानुद्दिश्य यागा अनुष्ठीयन्ते । तत्र प्रथम पूर्वयागानां पूर्वदिनेऽनुष्ठानं भवति, तत पर परदिनेऽनुष्ठीयते । उक्त यागानुष्ठाय तत पितृदेवताका इष्टिरनुष्ठीयते । सा च महापितृयज्ञशब्देनोच्यते । तत्र सोमवन्त पितर पितृमान् वा सोम, बर्हिषद पितर, अग्निष्वात्ता पितर यमो वैवस्वतो वा यम इति देवता । प्रतिदैवतम् अत्रानुवाक्याद्वयम् एका च याज्येति मन्त्रत्रय सुप्रयुज्यते । तत्र देवतात्वेन यम गृहीत्वा यागकल्पे 'परेयिवांसम्' इत्येषा यमयागस्य याज्येत्यर्थ ।''

हे मदीयान्तरात्मन् यजमान वा, त्वं राजानम् पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर। कीदृशम्? प्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान् महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनु परेयिवांसम् क्रमेण मरणादूर्ध्वं प्रापितवन्तम्। तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतामर्थे पन्थां स्वर्गलोकोचितं मार्गम् अनुपस्पशानम् अबाधमानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः। वैवस्वतम् विवस्वतः सूर्यस्य पुत्रं जनानाम् पापिनां सङ्गमनम् गन्तव्यस्थानरूपम् ॥१॥

परेयिवांसम् परागतम् अत्यन्तविप्रकृष्टदेशे गतवन्तम्। उपेयिवाननाश्वाननूचानश्च [३।२।१०९] इति क्वसन्तो निपातितः। उपसर्गग्रहणमतन्त्रम्[1]। परागतिं विशिनष्टि। प्रवत महीः अनु प्रकृष्टवतीर्भूमीः प्रति। सर्वां भूमिमतिक्रम्य वर्तमानमित्यर्थः। उपसर्गाच्छन्दसि धात्वर्थे [५।१।११८] इति वतिः। अर्थग्रहणसामर्थ्याल्लिङ्गसंख्यायोगः[2]। किंच बहुभ्यः पितृलोकं गतेभ्यः पन्थां पन्थानं मार्गम् अनुपस्पशानम् अन्विष्यन्तमवेत्यस्यार्थे। अवगच्छन्तमित्यर्थः। स्पशतिर्दर्शनकर्मा। एवंरूपं वैवस्वतं विवस्वतः पुत्रं जनानां मृतानां सङ्गमनम् प्राप्तिस्थानभूतम् एवं महानुभावं यमं राजानं हविषा सपर्यत* पूजयत† ॥१॥

[1] न चात्रोपसर्गस्तन्त्रम्। अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव। काशिका।

[2] ''उपसर्गाच्छन्दसि धात्वर्थे'' इति प्रकरणाद् न्यर्थेऽभिधेये वतिप्रत्ययः। ननु तत्कथं प्रत्ययान्तस्य कथं लिङ्गसंख्याभ्यां योगः। उच्यते। उपसर्गाच्छन्दसि धात्वर्थे इत्यत्र धात्वर्थग्रहणमेऽपि धातोरभिधेयत्वाद्धात्वर्थेन सामर्थ्याद् धात्वर्थः संगृह्यते। तथापि क्रियमाणम् धात्वर्थम् एतत् ज्ञापयति—समर्थे धात्वर्थेऽभिधेये उपसर्गाद् वतिर्भवतीति। तदात्र सत्त्वस्य लिङ्गसंख्यायोगित्वात् तदभिधायिनो वतप्रत्ययस्यापि लिङ्गसंख्यायोगित्वमाश्रयतम्। तत्र च तत्प्रत्ययात्—कः पुष्पांकृतोऽर्थं वति। माधवम्। माधवे प्रकृतिप्रत्ययाभ्यां द्योतते इति। S. under AV 13 2

* A V reads सपर्यत for दुवस्य

† The second com. in each case is reprinted from Sāyana's Atharva Veda-bhāṣyam

The stanza occurs also in TA. vi. 1 1 where S explains exactly as under RV.

In the *Nirukta* the stanza is explained thus परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इति। अवतिर्गतिकर्मा*। बहुभ्य पन्थानमनुपस्पाशयमानम्, वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्येति। दुवस्यती राध्नोतिकर्मा। "Who has departed who has gone round the heavenly heights, i e, elevations, depressions The verb *av* means 'to go' The sense is and with oblation, worship the king Yama, the son of Vivasvat (the sun), who has shown the path to many and who is the rendezvous of men The verb *duvasyati* means to worship" (L SARUP)

परेयिवांसम्—Here and under TA vi 1 1 S takes the root as अन्तर्भावितण्यर्थ, but under Av xviii 1 49 he rightly takes it in its ordinary sense *Cf* परेयु in st 2

मही —मही is a well established adjective, the fem of मह्, *cf* मही महीं सुष्टुतिमीरयामि, I utter forth a mighty eulogy of the mighty one ii 33 8 In the *Nighantu* मही is read in the list

---

* MSS and printed editions read अवतिर्गतिकर्मा and commentators have racked their brains in vain to offer a reasonable explanation Durga says अवतिर्गतिकर्मा इत्येतदत्र निर्वचनं कथं सम्बध्यत इति विमृश्यम्। अथवा प्रवत इत्यवतिरेवायमादिलुप्त सपूर्व इति भाष्यकाराभिप्राय। Skanda Maheśvara merely says उपसर्गाच्छन्दसि धात्वर्थे इत्यत्र वतिस्तो बहुवचनम्। प्रकृष्टेन गमनेन उद्वतो प्रकृष्टगतीरित्यर्थं। SARUP says: It is not clear why Yaska introduces the verb *av* 'to go' Durga does not throw any light on it'

It is just possible however that the correct reading is प्रवतिर्गत्यर्थं as प्रवते along with अवति and अवते is found in the *Nighantu* in the list of गतिकर्म roots In *Nir* xi 38 प्रवतति is explained as प्रप्लवति It would appear therefore that Yaska derives प्रवत् from पृ 'to go with प्र and explains प्रवत as उद्वत and निवत

2

| | |
|---|---|
| यमो नो गातुं प्रथमो विवेद | यमः । नः । गातुम् । प्रथमः । विवेद । |
| नैषा गव्यूतिरपभर्तवा उ । | न एषा । गव्यूतिः । अपऽभर्तवै । ऊँ इति । |
| यत्रा नः पूर्वे पितरः परेयु-* | यत्र । नः । पूर्वे । पितरः । पराऽईयुः । |
| रेना जज्ञानाः पथ्याऽअनु स्वाः ॥२॥ | एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥२॥ |

Yama (*Yamáḥ*) for us (*naḥ*) the way (*gātúm*) hath first found out (*prathamáḥ viveda*); this pasture (*eṣā gávyūtiḥ*) is not to be taken away (*ná apabhartavai u*). Whither (*yátra*) our former fathers (*naḥ pū́rve pitáraḥ*) have departed (*pareyúḥ*) thither (*enā*) those that have been born since (*jajñānā́ḥ*) tread along their own roads (*svā́ḥ pathyā̀ḥ ánu*)

प्रथमः सर्वेषां मुख्यो यमो नः अस्माकं प्रजानां गातुम् शुभाशुभनिमित्तं, विवेद जानाति । एषा गव्यूतिः न अपभर्तवै उ । अतिशयज्ञानयोगाद् यमस्य न केनचिदपहर्त्तुमपनेतुं शक्यत इत्यर्थः । यत्र यस्मिन् मार्गे नः अस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तो जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूता गतीः अनु गच्छन्ति ॥२॥

यमो देवः नः अस्माकं सम्बन्धिनां मृतानां गातुं मार्गं प्रथमः पूर्वगामी सन् विवेद अजानात् । उ अपि च एषा मृतेन गन्तव्या यमेन नेतव्या गव्यूतिः पद्धतिः । मार्ग इत्यर्थः । "गोर्यूतौ छन्दसि" [६।१।७९।२] इति वान्तादेशः । अपभर्तवै अपहर्तुं देवैः मनुष्यैः वा परिहर्तुं न शक्येति शेषः । अवश्यं गन्तव्यैवेत्यर्थः । आत्मसाक्षात्काररहितैः पुरुषैः स्वकर्मफलभोगाय पितृलोक-प्राप्तेरावश्यकत्वात् । अपभर्तवै इति । तवै चान्तश्च युगपत् [६।२।५१]

* AV. xviii. 1. 50 reads परेताः for परेयुः.

इत्युभयपदप्रकृतिस्वरत्वम् । यत्र यस्मिन् मार्गे नः अस्माकम् पूर्वे पूर्वभाविनः पितरः परेताः परागताः । येन च मार्गेण पुनरागत्य जज्ञानाः जाताः सर्वे स्वाः स्वीयाः स्वस्वकर्मानुरोधिनीः पथ्याः हितकरा* भूमीर्गच्छन्ति । स्वस्वकर्मोपार्जितानि स्थानानि स्वेषां हितानि भवन्ति । तं मार्गं यमो विवेदेति पूर्वत्र सम्बन्धः ॥२॥

गातुम्—path, way, place, from गा 'to go', *cf.* class. औशातु Yama *was the first mortal to die and discover the way of the departed.* Skt. *gātu h*, Av. *gatu š*, O P. *gaθu* The word is read in *Nigh* 1 1, among the synonyms of the earth In the *Nirukta* (iv 21) गातु यज्ञाय गातु यज्ञपतये is explained as गमन यज्ञाय गमनं यज्ञपतये. In the *Aitareya Aranyaka* S explains गातु as गन्तव्य मार्गं. 'कमिमनिजनिगामायाहिभ्यस्' [उ° १।७३] इत्यौणादिकः तु । *gatu is derived both from* गा 'to go' and गा 'to sing', of these the former became obsolete in classical Skt, the latter remained as an agent noun "गातुः पु स्त्रोकिलि भृङ्गे गन्धर्वे गायनेऽपि च" इति विश्व ।

गव्यूति—बहुव्रीहि of गो and ऊति with euphonic य, lit. having food for cattle, then pasture, then by generalisation as in the case of many words with गो as one of their members, abiding-place Acc to Sanskrit Grammar the components are गो and यूति

अपभर्तवै—Dat. infinitive of अप-भृ with a passive sense [1] Infinitives in तवै are merely extended forms of the dative inf in तवे and are doubly accented, *e g*, *é tavai* 'to go' *pá tavái* 'to drink', *hantavai* 'to slay' (x 125 6) etc Class अपहर्तुम 'तवैशेऽन्तश्छन्दसि°'।

पितर—'To the Fathers correspond the Fravashis among the Iranians, the "heroes of the past" and the *Theoi Patrōoi* among the Greeks, the Divi Manes and Lares among the Romans' KAEGI, p 159

एना—is often used as an Instrumental adverb, meaning 'in this way' V. G. S, p 210 Here, however, it is clearly correlative to यत्र *Cf.* AV. ix 9 22

यत्रा सुपर्णा अमृतस्य भक्षमनिमेषं विदथाभिस्वरन्ति ।
एना विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्राविवेश ॥

---

* One expected हितकरीर्भूमीः

[1] *Cf* भर्तिविदे v 62. 9.

17—1481B T

of पृथिवीनाम बाडनाम, गौनाम and द्यावापृथिवीनाम *Cf* AV xviii 4 7 तीर्थैस्तरन्ति प्रवतो महीरिति by crossings they cross to the mighty heights

प्रवत —Indian commentators generally follow the order of words in the text and construe प्रवत as an adj to मही European commentators follow the maxim पाठक्रमादर्थक्रमो बलीयान् and holding as they do that प्रवत्, उद्वत् and निवत् are abstract nouns regard मही as an adj to प्रवत[1] The word प्रवत् cannot be derived with the suffix मतुप for the simple reason that मतुप् is unaccented and प्रवत् is accented on the second syllable AVS correctly derives it with वति from प्र acc to उपसर्गाच्छन्दसि धात्वर्थे "The suffix vat forms seven feminine abstract substantives with a local sense, from adverbs or prepositions अर्वावत् 'proximity', आवत proximity उद्वत् height', निवत् depth, परावत् 'distance,' प्रवत् height संवत् region,' MACDONELL, *Vedic Grammar*, § 233" In every case the suffix is accented *Cf* याति देव प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् । आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमान ॥ i 35 3 The god goes by the upward by the downward path, adorable he goes with his two bright steeds God Savitar comes from the far distance chasing away all sorrows'

बहुभ्य —बहुभ्य बहुभ्यस्य स्वकर्मेषु बहुभ्य । Dativus commodi

पन्थाम्—class पन्थाम् The following forms are found in RV Nom sing पन्था Nom pl पन्था,[2] Acc sing पन्थाम्, Instr sing पथा Instr pl पथिभि, Gen pl पथाम्, Loc pl पथिषु A stem पन्थाम् makes its appearance in AV and VS which show पन्थाम exclusive

---

[1] The fact that we have everywhere प्रवतो मही and not महो प्रवत is in favour of the view of Indian commentators Whitney translates 'the paths called great' On the other hand प्रवत् is used by itself in a sense [illegible] AV vi 28 3

[2] The Nom pl pathaḥ occurs in RV i 100 3 and the Gen pl pathīnām in v i 11.

ly in the Nom. pl., although in the Acc. sg. पन्थाम् is still the usual form. पन्थान and पन्थानम् evidently owe their origin to अध्वान and अध्वानम्. (A. G. III, pp. 302 f.) Av. *pantam*, beside *pantānəm* which occurs only once.

अनुपस्पशानम्—perf. part. Ā of स्पश् 'to spy' 1Ā preceded by अनु. *Cf.* AV. vi. 28. 3: यः प्रथमः प्रवतमाससाद बहुभ्यः पन्थामनुपस्पशानः। यो अस्येशे द्विपदो यश्चतुष्पदस्तस्मै यमाय नमो अस्तु मृत्यवे ॥

वैवस्वतम्—In the Avesta also Yima the first of men and ruler of paradise is the son of Vīvanhant.

सङ्गमनम्—formed from the causal root; *cf.* अहं राष्ट्री सङ्गमनी वसूनाम् x. 125. 2. "In the Avesta, Vd. ii. 21 Yima makes a gathering (*hanjamanəm*) of mortals. *Cf. Aidēs agēsilaos.*" LANMAN. "Yama is the first man, so also the first to arrive in the realm of the Immortals, the natural head of those who are destined, each in his turn, to follow him thither. Therefore he is called in x. 135. 1 the 'lord of races, the father,' and in x. 14. 1 the 'gatherer of the peoples.' *Cf.* AV xviii. 3. 13 यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम्। वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा सपर्यत ॥"

यमं राजानम्—Yama is often called राजन् in RV but never देव. In the Avesta also the title *xšaēta* ("ruler") is always added to the name of Yima and from this full name Yima Xšaētō arose the word *Jamshid*. In classical Sanskrit and many Indian vernaculars also we generally speak of Yama-rāja. *Cf.* धर्मराज ममाग्रजः यमराजसहोदर। यमः श्राद्धदेव वैवः स्वराज् धर्माणि च ॥

दुवस्य—2 sing imp. pres. of दुवस् 'gift' from दु collateral form of दा 'to give'. The denominative must have grown obsolete by the time of AV. which substitutes सपर्यत for दुवस्य. It is the sacrificer that is addressed. In the AV. the plural form is used.

जज्ञाना —perf part Ā of जन् 'to be born' Geldner (*Vedische Studien*, II 233 289) thinks there is here a clear reference to metempsychosis 'they are born each according to his (fate's) path "* G regards जज्ञाना here as equivalent to a finite verb (Z D M G 63 347)

पथ्या —pathways The stem is पथ्या fem with final स्वरित This is Vedic Classical पथ्य Under iii 14 3 S derives it thus पथिषु साधव इत्यर्थे तत्र साधुरिति यत्। भस्याढे तद्धिते इति टिलोपः। तित्स्वरितं इति स्वरितः।[1] Since an independent Svarita is immediately followed by an उदात्त we have कम्पस्वर here See pp 129-130

3

| | |
|---|---|
| मातली कव्यैर्यमो अङ्गिरोभिर् | मातली \| कव्यैः \| यमः \| अङ्गिरःऽभिः । |
| बृहस्पतिर्ऋक्वभिर्वावृधानः । | बृहस्पतिः \| ऋक्वऽभिः \| ववृधानः । |
| याँश्च देवा वावृधुर्ये च देवान्त् | यान् \| च \| देवाः \| ववृधुः \| ये \| च \| देवान् । |
| *स्वाहान्ये स्वधयान्ये मदन्ति ॥३॥ | स्वाहा \| अन्ये \| स्वधया \| अन्ये \| मदन्ति ॥३॥ |

Mātalī with the Kavyas (*Mātalī Kavyaiḥ*), Yama with the Aṅgirases (*Yamaḥ Aṅgirobhiḥ*), Bṛhaspati with the Ṛkvans (*Bṛhaspatiḥ Ṛ́kvabhiḥ*) having grown strong (*vāvṛdhānaḥ*)—those whom the gods have made strong (*yā́n ca devā́ḥ vāvṛdhúḥ*) and those who [have made strong] the gods (*yé ca devā́n*), some (*anyé*) rejoice in (*madanti*) the exclamation Svāhā (*Svā́hā*), others (*anyé*) in the oblation (*Svadháyā*)

---

[1] Though यतोऽनावः 6. 1. 213 supersedes तित् स्वरितम् here, still यतोऽनावः is regarded by S. as अनित्य 'यतोऽनावः' इत्याद्युदात्तत्वमनित्यम् इति 'ईडेन्यो नमस्यः' इत्यत्र दर्शितम्। S. under RV i 71 4.

* AV. xviii, 1. 47, reads *d* as ते नोऽवन्तु पितरो हवेषु.

आग्निमारुते 'मातली कव्यै'रित्येषा धाय्या[1]। सूचितञ्च—'इमं यम प्रस्तरमा हि सीद मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः' [आ° श्रौ° ५।२०।६] इति।

मातली मातलिरिन्द्रस्य सारथिः, तद्वानिन्द्रो मातली। स कव्यैः कव्यभाग्भिः पितृभिः सह वावृधानः वर्धमानो भवति यमः च अङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति। [बृहस्पतिः ऋक्वभिः ऋक्प्रतिपाद्यैः पितृविशेषैः सह वर्धमानो भवति*।] तत्र देवा इन्द्रादयो यान् च कव्यभागादीन् पितॄन् वावृधुः वर्धयन्ति ये च कव्यभागादयः पितरो देवान् इन्द्रादीन् वर्धयन्ति तेषां मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण हृष्यन्ति। अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति ॥३॥

मातली यमो बृहस्पतिश्च पितॄणां नेतारो देवाः। अत्र मातली नाम देवः [कव्यैः] एतत्संज्ञकैः पितृभिः सह वावृधानः वर्धमानो भवति यजमानप्रत्तेन हविषा। तथा यमः देवः अङ्गिरोभिः पितृभिः सह। यमस्य देवत्वं पितृत्वं चेति द्वैरूप्यमस्ति। अत्र देवत्वं विवक्षितम्। तथा बृहस्पतिः देवोऽपि ऋक्वभिः अर्चनीयैः [एतन्नामकैः पितृभिः सह वावृ]धानः। तत्र यान् च पितॄन् देवाः मातल्यादयः प्रमुखाः सन्तः वावृधुः वर्धयन्ति यज्ञे। ये च पितरः कव्यादयः देवान् निर्दिष्टान् वावृधुः वर्धयन्ति। स्वधाप्रदाने। ते अत्र निर्दिष्टाः पितरः नः अस्मान् हवेषु आह्वानेषु अवन्तु रक्षन्तु ॥३॥

मातली—It will be noticed that in the com. on AV. S. simply says मातली नाम देवः, but here, under TS. ii, 6. 12. 5, etc., he identifies him with Indra. The process of identification is not sound, as Mātalī always ends in long ī in the three passages in

---

[1] "सोमयागे तृतीयसवने होतुर्द्वितीयं शस्त्रमाग्निमारुतं नाम। तस्मिञ्छस्त्रे धाय्यात्वेनैषा विनियुक्ता। धाय्या नाम मन्त्रमध्ये पठनीया ऋक्।"

* This is not found in any MS. We have supplied it from the com. on TS. ii. 6. 12. 5.

which it occurs in AV, and further if the suffix *in* be added to the *i* stem the word would be accented on the suffix S might have said मातली मन्देनाव इन्द्रो लक्ष्यते

कव्यै—कव्य from कवि means originally wise, as masc pl, a class of Pitrs In later literature कव्य is generally used along with हव्य and means the food offered to the Pitrs Unlike स्वाहा and स्वधया in *d* which are instrumentals proper, कव्यै is the sociative instrumental (सहार्थे तृतीया)

अङ्गिरोभि—The Angirases, a great family of priests are mentioned here as a great group of ancestors They are generally associated with Brhaspati who is called Angirasa See p 38

ऋक्वभि—*Rkvan* like *Maghavan* is formed with the possessive suffix वन् before which ऋच is regarded both as पद and as भ, पदत्वात् कुत्वम् भत्वात् जश्त्वाभाव The Rkvans also are a class of ancestors Brhaspati s association with the Rkvans is well known, *cf* स सुष्टुभा स ऋक्वता गणेन iv 50 5 There was the same confusion between van and vant stems in the case of ऋक्वन् as in the cases of अर्वन् and मघवन्

वावृधान—perfect part Ā of वृध 'to grow' Note the lengthening of the reduplicating vowel as in the case of वावृधाथ, चाकन्, जाग्र, etc (V G S, p 155 9) Pp shows the short vowel

यांश्च etc—*Cf* the very common expression योऽस्मान् द्वेष्टि यं च वयं द्विष्म.

वावृधु—perfect 3 pl. of वृध् The ancestors make the gods strong with the offerings and the gods make the ancestors strong with their aid For a somewhat similar idea *cf* सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् (*Raghu* i 26) and देवान् भावयतानेन ते देवा भावयन्तु व । परस्परं भावयन्त श्रेय परमवाप्स्यथ। *Gita* iii 11

स्वाहा—स्वाहेति देवानां हविर्दाने। "स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते" इति श्रुते । कौशिकेनाप्युक्तम् [१११]—'स्वाहाकारवषट्कारप्रदाना देवा, स्वधाकार नमस्कारप्रदाना पितर,' इति। यथयास्कोऽप्याह 'स्वाहेत्येतत् सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा' [नि° ८२१] इति। S on AV. ii 16 1

स्वधा—like स्वस्ति, स्वधा was declined in RV where it meant a funeral offering to the Pitrs अध स्वधा अधयत् i 144 2 'then drank स्वधा s' The later form of the word appears to be सुधा even as सुस्थ would appear to be the later form of स्वस्थ

In the *Nighantu* (i 12) स्वधा is read among the synonyms of उदक and of अन्न (स्वधे figures among synonyms of द्यावापृथिवी) Later it came to be used as an exclamation uttered on presenting an oblation to the Pitrs 'स्वेभ्यो धीयते स्वस्मिन् वा धीयत इति स्वधा । घञर्थे कविधानम् इति क । स्वम् आत्मानं भोक्तृशरीरं दधाति पुष्णातीति वा स्वधा । आतो ऽनुपसर्गे क ।' S on AV ii 29 7

स्वाहान्ये स्वधयान्ये—Matali, Yama and Brhaspati rejoice in the exclamation स्वाहा and the Kavyas, Angirases and Rkvans in the funeral oblations offered to them

4

| | |
|---|---|
| इमं यम प्रस्तरमा हि सीदा- | इमम् । यम । प्रऽस्तरम् । आ । हि । सीद |
| ङ्गिरोभिः पितृभिः संविदानः । | अङ्गिरःऽभिः । पितृऽभिः । सम्ऽविदानः । |
| आ त्वा मन्त्राः कविशस्ता वहन्- | आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु |
| त्वेना राजन्हविषा मादयस्व* ॥४॥ | एना । राजन् । हविषा । मादयस्व ॥४॥ |

On (*ā*) this strewn grass (*imam prastaram*) O Yama (*Yama*), be seated (*sīda*), joining thyself (*saṁvidānaḥ*) with the Aṅgirases, the Pitrs (*Aṅgirobhiḥ pitṛbhiḥ*) Let the spells (*mantrāḥ*) recited by wise men (*kaviśastāḥ*) bring thee (*tvā ā vahantu*) Rejoice (*mādayasva*) O King (*rājan*), in this oblation (*enā haviṣā*)

* AV xviii 1 60 reads रोह for सीद in *a* and हविषो for हविषा in *d*

महापितृयज्ञे यमस्य 'इमं यमे'त्यादिके द्वे अनुवाक्ये[1]। 'इमं यम प्रस्तरमा हि सीदेति द्वे' [आ° श्रौ° २।१९।२२] इति हि सूत्रितम्। सैवाग्निमारुतेऽपि धाय्या। सूक्तं पूर्वमेवोदाहृतम्[2] ॥

हे यम, अङ्गिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमत्यं गतस्त्वम् इमं प्रस्तरम् विस्तीर्णं यज्ञविशेषम् आसीद आगत्योपविश। हि यस्मादेवं तस्मात् कविशस्ताः विद्वद्भिरृत्विग्भिः प्रयुक्ता मन्त्राः त्वा त्वाम् आवहन्तु। हे राजन्, एना एतेन हविषा तुष्टो मादयस्व यजमानं हर्षय ॥४॥

हे यम इमं पुरत आस्तीर्णं प्रस्तरं बर्हिषम्। उपस्तीर्णो दर्भः प्रस्तरः। प्रे स्त्रोऽयज्ञे [३।३।३२] इति निषेधाद् घञभावः। ऋदोरप् [३।३।५७]। तं प्रस्तरम् आ सीद। हि इति पादपूरणः। किमेक एव? नेत्याह। अङ्गिरोभिः एतन्नामकैः पितृभिः सह संविदानः ऐकमत्यं प्राप्तः। 'समो गम्यृच्छि°' [१।३।२९] इत्यात्मनेपदम्। [हे राजन्] त्वा त्वां कविशस्ताः कविभिः क्रान्तप्रज्ञैर्महर्षिभिः स्तुताः मन्त्राः आह्वानसाधनाः आ वहन्तु आह्वानं कुर्वन्तु आगमयन्तु। आगत्य च एना एनेन अनेन। द्वितीयाटौस्स्वेनः [२।४।३४] इत्येनादेशः। सर्वविधीनां छन्दसि विकल्पितत्वाद् इनादेशाभावः। हविषः। तृतीयार्थे षष्ठी। हविषा अस्माभिर्दत्तेन मादयस्व ॥४॥

प्रस्तरम्—from स्तृ to strew means primarily straw strewn grass In class Skt it means rock

आ सीद—transitive The verb is accented because of हि

संविदान—pr part Ā of विद् 'to find' which in RV is both अदादि and तुदादि

मादयस्व—स्वार्थे णिच्, cf स्वाहान्ये स्वधयान्ये मदन्ति 3 d The sense of णिच् is clear in मा वेरा मा हन्तो मादयन्ति x 34. 1

---

[1] "चातुर्मास्यगतीय उत्तरे महापितृयज्ञे (पृ० २५१) यमदेवतापक्षे इमं यमेत्यादिके द्वे याज्यानुवाक्यात्वेन विनियुज्येते। अनुवाक्या नाम हविषा यजनात् पूर्वं पठ्यमाना ऋक्। सा च सर्वत्रैव भवति, परन्त्वत्र पाठेऽनुवाक्यात्वं भवति इति पूर्वसूत्रमिव (पृ० २५१)।"

[2] पूर्वत्रा यथो भाष्ये (पृ: २५८)।

| | |
|---|---|
| अङ्गिरोभिरा गहि यज्ञियेभि- | अङ्गिरःऽभिः। आ। गहि। यज्ञियेभिः। |
| र्यम वैरूपैरिह मादयस्व। | यम। वैरूपैः। इह। मादयस्व। |
| विवस्वन्तं हुवे यः पिता ते | विवस्वन्तम्। हुवे। यः। पिता। ते। |
| ऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥५॥ | अस्मिन्। यज्ञे। बर्हिषि। आ। निऽसद्य ॥५॥ |

Come here (*ā́ gahi*) with the reverend Aṅgirases (*yajñíyebhih aṅgirobhih*). O Yama (*Yáma*) rejoice here (*ihá mādayasva*) with the sons of Virūpa (*Vairūpaih*) I invoke (*huve*) Vivasvant (*Vivasvantam*) who is thy father (*yáh pitā́ te*). [Let him rejoice] being seated (*niṣadya*) on the Kuśa grass (*barhiṣi ā́*) in this sacrifice (*asmín yajñé*)

हे यम, वैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आगहि आगच्छ। आगत्य च इह अस्मिन् यज्ञे मादयस्व यजमानं हर्षय। यः विवस्वान् ते तव पिता अस्ति अस्मिन् यज्ञे तं विवस्वन्तं हुवे आह्वयामि। स चास्तीर्णे बर्हिषि आ निषद्य उपविश्य यजमानं हर्षयतु ॥५॥

हे यम इह अस्मिन् कर्मणि अङ्गिरोभिः एतन्नामकैः पितृभिः सह आ गहि आगच्छ। कीदृशैः? यज्ञियैः यज्ञार्हैः। एवं वैरूपैः विरूपाख्यस्य महर्षेः गोत्रजैः सह आगहि। आगत्य च इह अस्मिन् यज्ञे मादयस्व तर्पयस्व। न केवलं त्वामेव ह्वयामि, किन्तु ते तव यः पिता विवस्वान् आदित्य तं विवस्वन्तं हुवे आह्वयामि। ह्वयतेर्लिटि 'बहुलं छन्दसि' [६।१।३४] इति सम्प्रसारणम्। अस्मिन् बर्हिषि आस्तीर्णे निषद्य यथा हविः स्वीकरोति तथा आह्वयामीति शेषः। आभिमुख्येन निषद्य इति वा ॥५॥

यज्ञियेभि.—worthy of sacrifice. 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्'। यज्ञियानाम् occurs in the next stanza and in x. 125 3.

वैरूपे.—Children of Virupa The Virūpas are a subdivision of the Angirases "Virūpa is mentioned in i. 45. 3, viii 64 6 and the Virūpas in iii 53 6 and x 62 5" MUIR Note that वैरूपैः is not analysed in the Padapātha See p 293

हुवे—Oldenberg holds (Z D M.G. 59, 355) that हुवे appears also as 2 sing imperative Ātm In that case we should translate 'call Vivasvant who is thy father' and there will be no occasion for resorting to अध्याहार to secure समान कर्तृकत्व But it is doubtful how far Oldenberg's view is correct And in this particular case Old thinks that since the priest has already invoked Yama, it would appear more appropriate for him to say 'I invoke thy father Vivasvant' than to say Invoke, Yama, thy father V', (*Ib.* 359).

Old points out that that the subject of निषद्य is the deity is clear from RV iii. 35 6, i 101 9, TS i 7. 13 4

आ निषद्य—पूर्वत्र यच्छब्दश्रुतेरत्र तच्छब्दाध्याहार, मादयस्वामित विभक्तिविपरिणामेन चान्वय ।

*d* occurs in iii 35 6 also from which it appears to have been borrowed here

**6**

| | |
|---|---|
| अङ्गिरसो नः पितरो नवग्वा | अङ्गिरस॑ । नः । पितरः । नवऽग्वाः । |
| अथर्वाणो भृगवः सोम्यासः । | अथर्वाणः । भृगव॑ । सोम्यासः । |
| तेषां वयं सुमतौ यज्ञियाना- | तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । |
| मपि भद्रे सौमनसे स्याम ॥६॥ | अपि । भद्रे । सौमनसे । स्याम ॥६॥ |

The Angirases, our fathers (*Áṅgirasaḥ naḥ pitáraḥ*) the Navagvas, the Atharvans, Bhrgus, the Soma loving (*Návagvāḥ, Athárvāṇaḥ, Bhŕgavaḥ somyā́saḥ*): we (*vayám*) would be (*syā́ma*) in the favour (*sumatáu*) of those worshipful ones (*téṣām yajñíyānām*), as also (*ápi*) in their excellent (*bhadré*) loving-kindness (*saumanasé*)

अङ्गिरसः अङ्गिरोनामका अथर्वाणः अथर्वनामका भृगवः भृगुनामकाश्च नः अस्माकं पितरो नवग्वाः* अभिनवगमनयुक्ता यद्वा नूतनवत् प्रीतिजनका इत्यर्थः। ते च सोम्यासः। सोममर्हन्तीति सोम्याः। यज्ञियानाम् यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वयं स्याम सर्वदा तिष्ठेम। अपि च सौमनसे भद्रे सौमनसस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥६॥

अङ्गिरसः एतन्नामानः अङ्गारात्मकाः। "येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्" [ऐ° ब्रा° ३।३४] इति निरुक्तम्। पूर्वे महर्षयः नः पितरः [अस्माकं पितरः नवग्वाः नूतनस्तुतिका नवभिर्मासैरुद्गता वा। तथा अथर्वाणः च नः पितरः भृगवः च नः पितरः। "भृगुर्भृज्यमानो न देहेऽङ्गारेषु" [नि°३।१७] इति निरुक्तम्। एते सर्वे सोम्यासः सोमार्हाः सोमसम्पादिनः। एषामङ्गिरःप्रभृतीनाम् ऋषिगणमध्ये प्राधान्यादिदानीन्तनानामपि प्राचुर्येण तद्गोत्रत्वात् पितृत्वम्। यज्ञियानां यज्ञार्हाणां तेषां सुमतौ शोभनायाम् अनुग्रहरूपायां बुद्धौ वयं स्याम भवेम। तेषां सुमतिरस्मासु भवेदित्यर्थः। अपि अपि च तेषां भद्रे कल्याणे सौमनसे। सुमनसो भावः सौमनसम्। युवादिषु [५।१।१३०] पाठो द्रष्टव्यः। तत्र स्याम भवेम। उक्तस्यैवार्थस्य स्पष्टाभिधानमेवत् ॥६॥

नवग्वाः—The word has been variously explained:

(1) a group of nine priestly ancestors,

(2) priests who win nine cows a-piece,

(3) priests who go out in sets of nine,

(4) नवग्व is the same as Lat. *nuntius*.

Daśagva was formed after the pattern of Navagva. S. explains the formation thus under RV. i 62. 4: नवशब्दे उपपदे गमेर्भावे

* "'अङ्गिरसो नः पितरो नवग्वाः' इति सामानाधिकरण्यदर्शनात् अङ्गिरसो नवग्वा इत्युच्यन्ते। ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः।" Skandasvāmin on RV. i. 33. 6. "मेधातिथिप्रभृतयोऽङ्गिरसः केचिन्नव मासान् सत्रमनुष्ठाय फलं लेभिरे, केचिद्दश मासान्। तत्र ये नव मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते नवग्वाः। ... ये दश मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते दशग्वाः।" S. under RV. iii 39. 5.

ञिपि 'गमः क्वौ' [६।४।४०] इत्यनुनासिकलोपे 'ऊ च गमादीनामिति वक्तव्यम्' [६।४।४०।२] इत्यूकारान्तादेशः। नवभिः गूः गमनं येषां ते नवग्वाः। अकारोपजनश्छान्दसः। पूर्ववद् बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

अथर्वाणः—"The name in the singular denotes the head of a semi-divine family of mythical priests" "Atharvan first established order by sacrifices, while the Bhrgus showed themselves gods by their skill (x. 92. 19)." "In the plural the Atharvans are enumerated as Fathers along with the Angirases, Navagvas and Bhrgus. They dwelt in heaven and are called gods. They destroy goblins with a magical herb (AV. 11. 6. 13, 4 37. 7)." *Vedic Mythology.*

भृगवः—The Bhrgus are connected with the discovery of the fire, its lighting up and its care. The word Bhrgu clearly means shining, from the root *bhrāj*. Bhrgu has been held to be originally the designation of the fire, or more especially the lightning, and the Greek Phlegyai have been compared as fire priests The comparison is not certain; it is, however, clear that the Bhrgus are mythical fire-priests, possibly, but not probably, the historic reminiscence of an actual family. KEITH, pp. 225-6. There are two popular papers on the "Ancient Bhrgus" in the *Journal of Oriental Research*, Vol V, Parts I and II.

सोम्यास.—see p 78

This stanza is explained in Nir. xi 19 thus अङ्गिरसो नः पितरो नवगतयो नवनीतगतयो वा, अथर्वाणः भृगवः सोम्याः सोमसम्पादिनः तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि येषां भद्रे मन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति। (नवगतयः पितृयज्ञागमनं येषां प्रतिमासं नवा गतिर्भवति। नवनीतगतयः नवनीतं प्रति येषां गमनं गतिरिदमस्माकमिति। ते नवग्वाः। विज्ञायते हि "स्वयं विग्लीनं पितृणाम्" इति। मन्दनीये स्तुत्ये। भाजनवति येन मनसा भाजयन्ति अभिमतैरर्थैः कीर्तं तस्मिन् शोभने च मदन्त्ये शोभने वा अप्यवगामि स्याम इत्यर्थः।

सौमनसे—Not analysed in the Pada text, because the first member सु which has undergone lengthening is a monosyllable and ends in a vowel. The form in class. Skt. is सौमनसे. "सुमनसो भावः सौमनसम्। 'तस्येदम्' इति सम्बन्धसामान्येऽण्प्रत्ययः। स चात्र भाववचनेऽपि सम्बन्धविशेषे पर्यवस्यति। यद्वा, 'हायनान्तयुवादिभ्योऽण्' इति भावे अण्। युवादिषस्य पाठो द्रष्टव्यः। S under i. 76. 2.

तेषां वयं सुमतौ etc —तस्य वयम् etc. RV iii 1 21, iii. 59 4, vi 47. 13, x 131 7, AV vii 92. 20, 125 7 etc.

7

| | |
|---|---|
| प्रेहि प्रेहि पथिभिः पूर्व्येभि- | प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । |
| यत्रा नः पूर्वे पितरः परेयुः । | यत्र । नः । पूर्वे । पितरः । पराऽईयुः । |
| उभा राजाना स्वधया मदन्ता | उभा । राजाना । स्वधया । मदन्ता । |
| यमं पश्यासि वरुणं च देवम् ॥७॥ | यमम् । पश्यासि । वरुणम् । च । देवम् ॥७॥ |

Go forth (*prehi*), go forth (*prehi*) by the ancient (*purvyébhih*) paths (*pathíbhih*) whither (*yatra*) our (*nah*) former (*purve*), fathers (*pitarah*) departed (*pareyuh*) Thou shalt look on (*paśyasi*) Yama and the god Varuna (*Yamam Varunam ca devam*), both kings (*ubhā rājana*) rejoicing in oblation (*svadhaya mádanta*)

सत्तमध्ये दीक्षितस्य मरणे 'प्रेही'त्याद्याः पञ्चर्चस्तृतीयावर्जिता होत्रा शंसनीयाः[1] । सूत्रितञ्च—'प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामुद्धरेत्' [आ° श्रौ° ६।१०।१९] इति ॥

यत्र यस्मिन् स्थाने नः अस्माकं पूर्वे पुरातनाः पितरः पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन् काले भवैः[2] । अनादिकालप्रवृत्तैरित्यर्थः । पथिभिः

---

[1] 'समानकल्पैरग्निहोत्रिभिः सप्तदशावरैश्चतुर्विंशतिपरमैरनुष्ठीयमानाः सोमयागविशेषाः सत्त्राणि नाम, येषां यागानां विधानावसरे ब्राह्मणवाक्ये इणधातोर्वा आस्धातोर्वा बहुवचनान्तस्य प्रयोगः क्रियते। ते चाग्निहोत्रिणः सम्भूय यागं कुर्वन्तः कर्मण्येकार्थायैकैकस्यैकैकं कार्यं निर्णीय ऋत्विग्रूपा यजमानरूपाश्च भूत्वा यागमनुतिष्ठन्ति। तत्र यो यजमानस्तस्य दीक्षित इत्युक्तिः। तस्य दीक्षितस्य चेत् तत्कर्ममध्ये मरणं तदा तं श्मशानं नीत्वा दाहोत्तरं यज्ञमागत्य तदह्नः कर्तव्यं समापयेयुः। तत्र होत्रा तद्दिनवक्तव्ये स्तोत्रशस्त्रादिषु याम्या ऋचो वक्तव्याः। तत्र प्रेहि प्रेहीत्याद्यास्तृतीयावर्जिता पञ्च ऋचो वक्तव्या भवन्ति।''

[2] भवे छन्दसि [४ ४ ११०] इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वे प्राप्ते व्यत्ययेनान्तोदात्तत्वम्। वस्तुतस्तु 'पूर्वैः कृतमिनयौ' च इति यप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तत्वम्।

x. 84. 3. समजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् RV. vi. 5. 4. "Burn him with thine own bulls for ever youthful, burning with burning heat, thou fiercest burner." विष्णुर्वरिष्ठो वरदो वरेण्यः Visnu P. कुतः कुवलयं कर्णे करोषि कलभाषिणि । किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥ *Kāvyādarśa.*

पूर्व्येभिः—पूर्वैः कृतमिनयौ च 4.4.133. पथिभिः पूर्विणैः । पूर्व्यैः । पूर्विणैः पूर्व्यैरिति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते । तत्कृताः पन्थानः प्रसृताः इति पथां प्रशंसा । *Kāśikā.*

उभा राजाना मदन्ता—उभौ राजानौ मदन्तौ. Both Yama and Varuna are kings, but Varuna alone has the epithet देव.

पश्यासि—2 sing. present subjunctive of दृश् (पश् for स्पश् acc. to philologists). Also पश्याः.

वरुणं च देवम्—does not amount to समाप्तपुनरात्तता because of उभा and the duals in *c.*

8

| | |
|---|---|
| सं गच्छस्व पितृभिः सं यमे- | सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । |
| नेष्टापूर्तेन परमे व्योमन् । | इष्टापूर्तेन । परमे । विऽओमन् । |
| हित्वायावद्यं पुनरस्तमेहि | हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि |
| सं गच्छस्व तन्वा सुवर्चाः ॥८॥ | सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥८॥ |

Be united with (*sáṃ gacchasva*) the Pitrs (*pitṛ́bhiḥ*), with (*sám*) Yama (*yaména*), with the sacrifices and good works (*iṣṭāpūrténa*) in the highest heaven (*paramé vyóman*). Leaving behind (*hitvā́ya*) [all] evil (*avadyám*), go anew (*púnar éhi*) to thy abode (*ástam*), be united with (*sáṃ gacchasva*) thy body (*tanvā́*) full of lustre (*suvárcāḥ*).

हे मदीय पितः, त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः सह संगच्छस्व । इष्टापूर्तेन श्रौतस्मार्तदानफलेन*

* All. But TA. vi. 61. 2 reads श्रौतस्मार्तकर्मफलेन which appear to be the correct reading here also. Under AV. iii. 12. 8 also S. says श्रौतं स्मार्तं च कर्म.

सङ्गच्छस्व। तत इष्टापूर्तेन संगम्य अवद्यम् पापं हित्वाय परित्यज्य अस्तम् म्रियमाणाख्यं* गृहं पुनरेहि आगच्छ। ततः सुवर्चाः। तृतीयार्थे प्रथमा। सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सङ्गच्छस्व ॥८॥

हे मृत पुरुष त्वं पितृभिः पितृ-पितामह-प्रपितामहैः संगच्छस्व पैतृमेधिकेन सापिण्ड्यकरणविधिना संस्कारेण [हेतुना सङ्गतो भव। पितृषु मध्ये प्राप्तस्थानो] भवेत्यर्थः। यस्तेषां राजा यमः तेनापि संगच्छस्व। तथा परमे उत्कृष्टे पितृलोकात् अपि श्रेष्ठे व्योमन् व्योम्नि द्युलोके नाकपृष्ठाख्ये कर्मफलोपभोगस्थाने इष्टापूर्तेन। इष्टं प्रत्यक्षश्रुतिचोदितं यागहोमदानादि। पूर्तं स्मृतिपुराणागमचोदितं[1] वापीकूपतटाकदेवागारनिर्माणादि। तेन उभयेन संगच्छस्व। तत् फलम् उपभुङ्क्ष्वेत्यर्थः। तथा अवद्यं पापं हित्वा त्यक्त्वा अस्तम् गृहनामैतत्। उत्तमलोकस्थितं गृहं पुनरेहि प्राप्नुहि। सुवर्चाः शोभनदीप्तिकस्तव आत्मा तन्वा स्वर्गलोकभोगयोग्येन शरीरेण संगच्छताम्[2] संयुज्यताम्। 'समो गम्यृच्छि०' [१।३।२९ का] इति संपूर्वाद् गमेरकर्मकादात्मनेपदम् ॥८॥

इष्टापूर्तेन—इष्ट is the past part. of यज् 'to sacrifice' and पूर्तं of पृ 'to fill.' As both are formed in the भाववाच्य acc to नपुंसके भावे क्तः they mean 'sacrifice' and 'fulfilment'. The word is a द्वन्द्व in which each member must originally have been a neuter plural but later on the form became crystallised and the compound came to be used in the singular. It is an irregular समाहार द्वन्द्व and occurs only here in RV. though it is frequently used in later literature. Acc to Sanskrit Grammar the long final of the first member can easily be accounted for by the rule अन्येषामपि दृश्यते 6. 3. 137. Under AB. 34. 3 S. says: इष्टापूर्तशब्दार्थः पूर्वाचार्यैर्दर्शितः—

वर्णाश्रमान्वयी धर्मं इष्टं पूर्तमथेतरत्।
प्रपा-तटाकादिरूपं तच्च सर्वत्र दृश्यते।
स्मार्तं पूर्तं श्रौतमिष्टमिति केचिद्विदोविदे॥

* म्रियमाणाख्यम्—M.

1 चोदितं विहितम्।

2 AV. reads संगच्छताम् for सङ्गच्छस्व.

In the *Kathopanisad* (i 8) the word is used in the dual इष्टापूर्ते being a द्वन्द्व is not analysed in the Pada text

व्योमन्—the loc of व्योमन् is व्योमन् and व्योमनि in the Vedas व्योमि and व्योमनि in classical Skt

हित्वाय—हित्वा, हित्वी and हित्वाय are the gerunds from हा to leave in RV हित्वा alone is used in class Skt AV (which has only गत्वाय and हत्वाय of gerunds in त्वाय) substitutes हित्वा for हित्वाय

अवद्यम्—See p 110

अस्तम्—अस्तम् is read in *Nigh* iii 4 among the synonyms of गृह SB ii 5 2 9 says गृहा वा अस्तम् अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन् इत्यस्तं गृहम्। 'क्तोऽधिकरणे च' [३।४।७६] इति क्त प्रत्ययः। Since भवन also means गृह अस्त is evidently derived from the root अस 'to be' With the unadi suffix तन् See p 317

सुवर्चाः—Adjective qualifying त्वम् understood Skt *varcas* Av *varcah* strength सु शोभनं वर्चः तेजः यस्य सः। 'सोमंगसो अनोमोपसो' इत्युत्तरपदाद्युदात्तत्वम्। *Cf* अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः x 85 44

तन्वा—*Cf* x 16 5 अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः। आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः॥ Restore him O Agni, to the Fathers, him who, offered to thee now goes in peace clothing himself in useful strength and let him meet with a new body; x 56 1 संवेशने तन्वश्चारुरेधि प्रियो देवानां परमे जनित्रे॥ When thou enterest thy (new) body, be welcome, be dear to the gods in the highest homes KAPGI pp 161, 160

9

| | |
|---|---|
| अपेत वीत वि च सर्पतातो- | अप। इत। वि। इत। वि। च। सर्पत। अतः। |
| ऽस्मा एतं पितरो लोकमक्रन्। | अस्मै। एतम्। पितरः। लोकम्। अक्रन्। |
| अहोभिरद्भिरक्तुभिर्व्यक्तं | अहःऽभिः। अत्ऽभिः। अक्तुऽभिः। विऽअक्तम्। |
| यमो ददात्यवसानमस्मै ॥८॥ | यमः। ददाति। अवऽसानम्। अस्मै ॥९॥ |

Go away (*ápeta*), disperse (*ví ta*), and creep away (*ví ca sarpata*) from here (*átah*), for him (*asmái*) the Pitṛs (*pitárah*) have made (*akran*) this place (*etám lokám*). Yama (*Yamáh*) gives (*dadāti*) him (*asmai*) a place of rest (*avasā nam*), adorned (*vyáktam*) with days (*áhobhih*), water (*adbhíh*) and nights (*aktúbhih*).

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षति 'अपेत वीत' इति[1]। सूत्रितञ्च— 'गर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतात इति' [आ॰ गृ॰ ४।२।८] इति*।

श्मशाने पूर्वं स्थिता हे पिशाचादयः, अतः अस्मात् मृतयजमानदहनस्थानात् अपेत अपगच्छत। वीत विशेषेण गच्छत। वि सर्पत च। इदं स्थानं, परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः। पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकम् इदं दहनस्थानम् अक्रन् यमस्याज्ञया अकुर्वन्†। यमोऽपि अहोभिः दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिः व्यक्तम् सक्तम्। शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः। अवसानम् दहनस्थानम् अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान् ॥९॥

अत्र 'अनया दहनस्थानं संप्रोक्षेत्' इति विनियोगात् तत्स्थानस्थितानां रक्षःपिशाचादीनामपगमनमभिधीयते। हे रक्षःप्रभृतयः यूयम् अपेत अपगच्छत। वीत। वी गत्यादिषु [धा॰ २।३८]। अत्र गतिरर्थः। विगता भवत। अतः अस्माद् दहनस्थानात् वि सर्पत च विविधं विशेषेण वा गच्छत। दूरं गच्छतेत्यर्थः।

---

[1] आहिताग्नेर्मरणे तं यज्ञपात्रैः सह श्मशानं नीत्वा यत्र तस्य दाहः कर्त्तव्यस्तस्य श्मशानायतनस्य प्रथममद्भिः प्रोक्षणं कर्त्तव्यम्। तत्र प्रोक्षणेऽयं मन्त्रः प्रयुज्यते।

* The quotation from the *Gṛhyasūtra* ends in इति, so another इति is necessary to show the end of the quotation. This इति is dropped in the printed texts and MSS.

† चक्रुर्वन्—M.

अपसारणीयान् विशिनष्टि। ये अत्र स्थले पुराणा. पूर्वंतना:[1] स्थ भवथ। ये च अत्र नूतना. इदानीन्तनाः स्थ तिष्ठथ। ते सर्वे अपेतेति सम्बन्ध'। अस्मै प्रेताय अहोभि. च अद्भिः क्षालनसाधनै. उदकैश्च अक्तुभिः अभिव्यक्तिसाधनाभी रात्रिभिश्च व्यक्तं सुविशदम् अवसानम् अवस्यत्यस्मिन्नित्यवसानम्। षो अन्तकर्मणि [धा° ४।३९]। अधिकरणे ल्युट्। स्थानम्। तद् असौ यम. देव' ददाति अदात्। तदर्थमपेतेति सम्बन्ध ॥९॥

This stanza as commentators point out, is addressed to the evil spirits that haunt the place of cremation

वीत—The accented इ of वि and the unaccented इ of इत contract to the svarita ई in RV and AV but not in TS etc Hence Pānini makes the rule optional—स्वरितो वानुदात्ते पदादौ 8 2 6 RP says इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च। उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत् ॥ iii 7

अक्रन्—3 pl root aor of कृ कृमृदृरुहिभ्यश्छन्दसि 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमि-जनिभ्यो लेः' [२।४।८०] इति च्लेर्लुक्।

अहोभि—See pp 214 5

अद्भि—from अप्+भि by dissimilation

अक्तुभि.—ak tu from अञ्ज 'to anoint' means primarily ointment thence a beam of light, then clear night It is read in the *Nighantu* (i 7) as a synonym of रात्रि

*Cf* ix 113 7 यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम्। तस्मिन् मां धेहि पवमानामृते लोके अक्षिते "O Pavamana, place me in that deathless, undecaying world wherein the light of heaven is set, and everlasting lustre shines ' ix 113 8 यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधि "Make me immortal where are those waters young and fresh "

व्यक्तम्—past part of वि and अञ्ज, 'to anoint' '*to adorn*'

अवसानम्—सो means "to bind,' अव सो 'to unbind, unharness ' Hence अवसान means 'a place to rest in ' *Cf* AV xviii 2 37 ददाम्यस्मा अवसानमेतद् य एष आगन् मम चेदभूदिह। यमश्चिकित्वान् प्रत्येतदाह ममैष

[1] This is one of the many ungrammatical expressions found in the commentary of Sayana

appearance of four eyes अक्ष्णोरुपरि बिन्दुद्वयवांश्चतुरक्ष S, on श्वा चतुरक्ष TS v 5 19 1 यस्याक्षिसमीपे द्वे पीते, अक्षिरूपवद्विकोणके स चतुरक्ष श्वा। Harisvamin on श्वानं चतुरक्षं हत्वा SB xiii 1 2 9 In RV i 31 13 Agni is described as चतुरक्ष (दिक्चतुष्टयाभिमुखो दीप्यसे। अक्षा मुखं लक्ष्यते। समन्ताद् यस्मै दीप्यसे इत्यर्थः। Skanda सर्वतोज्वाल Venkata सर्वतो ज्वालाभि पश्यन् Madhava 'दिक्चतुष्टयेऽपि इन्द्रियस्थानीयज्वालायुक्त S), i e, with eyes that could look in all directions with equal keenness

'Two broad nosed four eyed spotted dogs, the offspring of Sarama occupy the path and guard the entrance of Paradise in order that no godless person may steal into the region of the blessed" The Iranians [also] believe that two dogs guard the Cinvat bridge leading to Paradise and passable only for the righteous KAEGI, p 159

'The Vedic texts look upon this pair of dogs in a variety of ways First, the soul of man has to get past them in order to go to heaven This is the familiar Cerberus idea Secondly the two dogs of Yama pick out daily candidates for death Thirdly, the dogs are entrusted with the care of the souls of the dead on their way to join Yama in heaven The Vedic texts tell us in plain language that they are the sun and the moon" BLOOMFIELD, *The Religion of the Veda* p 105

सुविदत्राम्—"सुविदत्र कल्याणविद्य इति हि यास्क। यद्वा विद्यते लभ्यत इति विदत्रं धनम्। विदत्र लाभे विद ज्ञाने इत्यस्माद् वा 'सुविदे कत्रन् [उ° ३। १०८] इति कत्रन् प्रत्यय। शोभनं विदत्रं धनं यस्य तत्। सुविदत्रशब्दं यास्कस्तु द्वेधा व्युत्पादयामास। सुविदत्रं भवति विन्दते वा एकोपसर्गाद् ददातेर्वा द्व्युपसर्गात्।' S on AV i 31 4 Acc to philologists the suffix is त्र (त्रन्) with the union vowel अ, cf *ám a tra* violent, *yáj a tra* adorable, *krnt a tra* shred *gáy a tra* song, *pát a tra* wing *vadh a tra* deadly weapon, *var a trá* strap" MACDONELL *Vedic Grammar* p 124

शबलौ—Elliptical dual for श्यामशबलौ Skt *śabala h* cf Gk. *kérberos*, Lat *Cerberus*

सधमादम्—the suffix is अमुम् Acc to philologists it is the cognate accusative of मदति

## 11

| | |
|---|---|
| यौ ते श्वानौ यम रक्षितारौ | यौ \| ते \| श्वानौ \| यम \| रक्षितारौ \| |
| चतुरक्षौ पथिरक्षौ नृचक्षसौ । | चतु ऽअक्षौ \| पथिरक्षी इति पथिऽरक्षी \| नृऽचक्षसौ । |
| ताभ्यामेन परि देहि राजन्त्- | ताभ्याम् \| एनम् \| परि \| देहि \| राजन् \| |
| स्वस्ति चास्मा अनमीवं च धेहि ॥११॥ | स्वस्ति \| च \| अस्मै \| अनमीवम् च धेहि ॥११॥ |

Those two dogs of thine (*yau te sva nau*) O Yama (*Yama*), the watchers (*raksita rau*) four eyed (*catur aksau*) path guarding (*pathi raksi*) men beholding (*nr caksasau*)—unto them (*ta bhyam*) give him over (*enam pari dehi*) O king (*rajan*), bestow (*dhehi*) on him (*asmai*) well being (*svasti ca*) and health (*anamivam ca*)

हे राजन्, हे यम, ते त्वदीयौ यौ श्वानौ विद्येते ताभ्या हे राजन् यम,* एनम् प्रेत परिदेहि रक्षार्थं प्रयच्छ। कीदृशौ श्वानौ? रक्षितारौ यमगृहस्य रक्षकौ। चतुरक्षौ अक्षिचतुष्टययुक्तौ। पथिरक्षौ मार्गस्य रक्षकौ। नृचक्षसौ मनुष्यै ख्याप्यमानौ। श्रुतिस्मृतिपुराणाभिज्ञा पुरुषास्तौ प्रख्यापयन्ति। ताभ्या श्वभ्या दत्त्वा अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि सम्पादय ॥११॥

यमरक्षितारौ यमो रक्षिता गोपायिता ययो। ऋतश्छन्दसि [५।४।१५८] इति कप्रभाव। 'अन्तोदात्तप्रकरणे त्रिचक्रादीनामुपसंख्यानम्'† [६।२।१९९।१]

---

* S appears to have placed both the vocatives at the beginning So this हे राजन् यम seems to be the note of a careless reader and should be dropped

† Both *Bhasya* and *Kasika* read °त्रिचक्रादीनां छन्दस्युपसंख्यानम्

राय इपतिष्ठतामिह ॥ "I give this place of rest to him who hath thus come and hath become mine here,—thus replies the knowing Yama—let this one approach my wealth here." (Whitney).

### 10

| | |
|---|---|
| अति द्रव सारमेयौ श्वानौ | अति \| द्रव \| सारमेयौ \| श्वानौ \| |
| चतुरक्षौ शबलौ साधुना पथा । | चतुःऽअक्षौ \| शबलौ \| साधुना \| पथा । |
| अथा पितॄन्त्सुविदत्राँ उपेहि | अथ \| पितॄन् \| सुऽविदत्रान् \| उप \| इहि \| |
| यमेन ये सधमादं मदन्ति ॥१०॥ | यमेन \| ये \| सधऽमादम् \| मदन्ति ॥१०॥ |

Run past (*ati drava*) the two sons of Saramā (*sārameyáu*), the four-eyed (*catur-akṣau*), brindled (*śabalau*) dogs (*śvā́nau*) by a good path (*sādhúnā pathā́*) Then (*áthā*) go to the beneficent Pitṛs (*pitṝ́n suvidátran upehi*) who rejoice in (*mádanti*) the same rejoicing (*sadhamā́dam*) with Yama (*Yaména*)

अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती । तावुद्धृत्य प्रेतस्य हस्तयोर्निदधाति 'अति द्रव सारमेयौ' इति द्वाभ्याम्[1]। सूत्रितञ्च—'वृक्कावुद्धृत्य पाण्योरादध्याद् अति द्रव सारमेयौ श्वानाविति' [आ° गृ° ४।३।१६] इति* ।

हे अग्ने, साधुना पथा समीचीनेन मार्गेण श्वानौ उभौ अति द्रव अतिक्रम्य गच्छ । यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः । कीदृशौ श्वानौ ? सारमेयौ । सरमा नाम काचित् प्रसिद्धा देवशुनी तस्याः पुत्रौ । चतुरक्षौ उपरिभागे पुनरप्यक्षि-

[1] "आहिताग्नेर्मरणे श्मशाने तस्य दाहावसरे यज्ञपात्राणि छित्त्वा भित्त्वाऽऽहिताग्नेस्तत्तदवयवेषु तानि विन्यस्यन्ते। तदा अनुस्तरणीपश्वोर्वृक्कभागौ छित्त्वा तस्य हस्तयोर्न्यसितव्यौ भवतः, तदैतन्मन्त्रस्य पाठः कर्तव्य इत्याश्वलायनगृह्यसूत्रे उच्यते।"

* This इति is not found in MSS. but is necessary, since the previous इति is a part of the quotation.

द्वयं ययोस्तादृशौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरो यमेन सधमादम् सहर्षं मदन्ति प्राप्नुवन्ति तान् सुविदत्रान् सुष्ठभिज्ञान् पितॄन् उपेहि उपगच्छ ॥१०॥

प्रेतः सम्बोध्यते। हे पितृलोकं गच्छन् प्रेत। सारमेयौ सरमा नाम देवशुनी तस्याः पुत्रौ। स्त्रीभ्यो ढक् [४।१।१२०]। चतुरक्षौ चत्वारि अक्षीणि ययोः। एकैकस्य चतुरक्षत्वम्। "बहुव्रीहौ सक्थ्यक्ष्णोः°" [५।४।११३] इति षच् समासान्तः। शबलौ शबलवर्णौ। यद्वा नामधेयमेतत्। श्याम शबलसंज्ञकौ। शबलाविति द्विवचनेन श्यामोऽपि विवक्ष्यते। स्मर्यते हि—

श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रदास्यामि स्यातां मे तावहिंसकौ॥

इति। तौ श्वानौ साधुना समीचीनेन ऋजुना पथा मार्गेण अति द्रव अतीत्य गच्छ। अध अथ अनन्तरं सुविदत्रान् विदत्रशब्दो धनवाची। सुधनान् शोभनहवीरूपान्नान्। यद्वा वेत्तेः कत्रन्प्रत्ययः। ज्ञानवाची विदत्रशब्दः। संज्ञानान् पितॄन् अपेहि। अपशब्द उपोपसर्गस्यार्थे। उपेहि उपगच्छेत्यर्थः। यद्वा अपशब्दो वर्जनार्थः। अपवृज्य मार्गासीनौ श्वानौ वर्जयित्वा पितॄन् इहि गच्छ। एतेर्लोटि रूपम्। ये पूर्वजाः पितरो यमेन पितृराजेन सधमादम् सह मादनं तृप्तिर्यस्मिन् कर्मणि तत् सधमादम्। सह तृप्तिहर्षो वा यथा भवति तथा मदन्ति माद्यन्ति तान् इहीति सम्बन्धः। सध मादस्थयोश्छन्दसि [६।३।९६] इति सहस्य सधादेशः। मादयते पुरजन्तो [३।३।५६] माद इति। माद्यतेर्वा व्यत्ययेन घञ् ॥१०॥

This stanza is "addressed to the spirit of the dead man whose funeral rites are being celebrated "

सारमेयौ श्वानौ चतुरक्षौ शबलौ—we should expect these duals to end in °आ See p 278

चतुरक्षौ—because the eyes were extra sharp or because there were two spots above the eyes of the dog which gave the

इत्यन्तोदात्तत्वम्। यद्वा यमशब्देन तत्स्वामिकं पुरमुच्यते। यमपुरस्य पालयितारौ। कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम्। चतुरक्षौ व्याख्यातम्। पथिरक्षी पितृभिर्गन्तव्ये मार्गे सीदन्तौ। छन्दसि वनसनरक्षिमथाम् [३।२।२७] इति विहित इन्प्रत्ययः सदेरपि व्यत्ययेन भवति। नृचक्षसा नृचक्षसौ नॄणां गन्तॄणां द्रष्टारौ हे राजन् पितॄणां स्वामिन् ते त्वदीयौ यौ श्वानौ वर्तेते ताभ्यां श्वभ्याम् एनम् अन्वादिष्टं प्रेतं परिधेहि। परिदेहीत्यर्थः। रक्षणार्थं दानं परिदानमित्युच्यते। किं च अस्मै त्वदीय लोकं गच्छते [स्वस्ति]। स्वस्तीत्यविनाशिनाम्। अविनाशम्। अनमीवम्। अमीवो[1] रोगः बाधा तद्रहितं स्थानं च धेहि विधेहि ॥११॥

चतुरक्षौ—See p 276 Acc to philologists, the second element is not अक्षि but अक्ष (Gk *op sis*, Lat *oc ulus*) "The final member बहुव्रीहि's is very frequently extended by the suffix *a* In the of RV there are at least fifteen such stems, thus अक्ष eye in अनक्ष eyeless अध्यक्ष eye witness, चतुरक्ष four eyed भूर्यक्ष many eyed, सहस्राक्ष हिरण्याक्ष etc" MACDONELL, *Vedic Grammar*, p 153 *catuś cakṣam* occurs in Av in the sense of 'four eyed'

पथिरक्षी—VS reads पथिषदी for पथिरक्षी, but Panini mentions रक्ष expressly in his rule छन्दसि वनसनरक्षिमथाम् 3 2 27

नृचक्षसौ—under RV i 22 7, Venkatamādhava explains नृचक्षसम् as मनुष्याणां द्रष्टारम् and Skandasvāmin adds शुभाशुभानां कर्मणां प्रत्यवेक्षितारम् Cf यमस्य दूतौ चरतो जनाँ अनु in the next stanza "नॄन् चष्टे इति नृचक्षसौ। चक्षेर्बहुलं शिच्च [उ° ४।२२१] इत्यसुन्। शित्त्वात् सार्वधातुकत्वेन ख्याञादेशाभावः। कृदुत्तरपदप्रकृतिस्वरत्वम्।" "In the RV. in general, and especially in its oldest parts, *ā* [in duals] is found before consonants and in pause, *au* before vowels Before *u* vowels this *au* is represented in the RV by *ā*, before other vowels by *āv*. The hymn containing it (i e. the irregular form नृचक्षसौ) is

[1] In RV and AV अमीव with the short final occurs only as the first member of ...

Atharvanic (rather than 'late), yet, curiously, the AV itself (supported by TA) has the 'regular' form Note that all three texts are irregular in the preceding चतुरक्षौ Dissimilation or assimilation of endings as between these two words? Even tho the hymn belongs by its subject matter to AV rather than to RV, the RV form is, a priori, more apt to be original " *Vedic Variants*, III pp 51, 52

स्वस्ति—used as an indeclinable here See p 49

अनमीवम्—अमीवाया अभाव इत्यभावार्थेऽव्ययीभाव । Class अनामयम् अमीवा (accented on the 1st syl) means disease from अम् 'to injure' (अट अमी ति) अनमीव (accented on the last syl) means free from disease and is generally an adj This is the only place in RV where it is used as a noun As an adj it is a बहुव्रीहि, accented on the last syl of the second member acc to नञ्सुभ्याम् P 6 2 172 As a neuter abstract noun it may be regarded as an अव्ययीभाव, being accented on the final syllable acc to समासस्य च P 6 1 223.

परि देहि—परि दा means to make over commit entrust ' अरायै त्वा परि ददामि AV iii 11 7

## 12

| | |
|---|---|
| उरूणसावसुतृपा उदुम्बलौ | उरुऽनसौ असुऽतृपौ । उदुम्बलौ । |
| यमस्य दूतौ चरतो जनाँ अनु । | यमस्य दूतौ । चरतः । जनान् अनु । |
| तावस्मभ्यं दृशये सूर्याय | तौ अस्मभ्यम् दृशये सूर्याय |
| पुनर्दातामसुमद्येह भद्रम् ॥१२॥ | पुनः । दाताम् असुम् । अद्य इह । भद्रम् ॥१२ |

The two broad nosed (*uru nasau*) life robbing (*asu tr pau*) dark hued (?) (*udumbalau*) messengers of Yama (*Yamásya dutáu*) roam (*caratah*) among men (*janan anu*) may they grant (*tau datam*) us (*asmábhyam*) here (*iha*) to-day (*adya*) auspicious life (*bhadrám ásum*) so that we may see the sun (*dṛśáye sū́ryāya*)

यमस्य सम्बन्धिनौ दूतौ श्वानौ जनान् अनु प्राणिनो लक्षीकृत्य सर्वत्र चरतः। कीदृशौ? उरुणसौ दीर्घनासिकायुक्तौ। असुतृपौ परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुम्बलौ उरुबलौ विस्तीर्णबलौ तौ उभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थम् अद्य अस्मिन् दिन इह कर्मणि भद्रम् असुम् समीचीनं प्राणं पुनः अस्मभ्यं दाताम् अदत्ताम् ॥१२॥

उरुणसौ विस्तीर्णनासिकौ। नासिकाशब्दस्य नस्भावः। सुप आकारः। असुतृपौ प्राणिनामसुभिः प्राणैस्तृप्यन्तौ प्राणापहारकौ। उदुम्बलौ विस्तीर्णबलावित्यर्थः। पूर्वपदे वर्णोपजनश्छान्दसः। यमस्य दूतौ प्रेष्यौ जनान् जननवतः उत्पत्तिमतः प्राणिनः [अनु] अनुलक्ष्य चरतः तेषां प्राणान् अपहर्त्तुं सर्वत्र सञ्चरतः। तौ दूतौ सूर्याय। क्रियाग्रहणं* कर्त्तव्यम् [भा° १।४।३२] इति कर्मण सम्प्रदानत्वाच्चतुर्थी। दृशये दर्शनाय। 'इगुपधात् कित्' [उ° ४।११९] इत्यौणादिक इप्रत्ययः। कित्त्वाल्लघूपधगुणाभावः। सूर्यं द्रष्टुम् अद्य इदानीम् इह अस्मच्छरीरे भद्रं भन्दनीयम् असु पञ्चप्रवृत्तिकं प्राणम् अस्मभ्यं पुनः दाताम् पुनः प्रयच्छताम्। ददातेश्छान्दसे लुङि "गातिस्था°" [२।४।७७] इति सिचो लुक्। बाहुलकादमाङ्योगेऽप्यडभावः ॥१२॥

उरुणसौ—metrical lengthening In the Vedas न is generally cerebralised even when it stands at the beginning of the second member of the compound, e g, प्रणपात् great grandson नश धातुस्थोरुषुभ्य ८।४।२८ ऋकाररेफषकारा नकार समानपदेऽवग्रहे नमन्ति RP v 40

असुतृपौ—S finding satisfaction in lives' i e, in robbing men of their lives Lanman postulates a Skt root तृप् in the sense of 'to steal' and notes 'not actually occurring in vbl. forms, but rendered probable by the deriv तृप the compds असु- and पशु तृप् and by the Avestan trf steal' तृप figures in Naigh iii 24 among the names of 'thief' पशुतृप् occurs in RV vii 86 5 अव द्रुग्धानि पित्र्या सृजा नो अव या वयं चकृमा तनूभिः। अव राजन् पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥ "Free us from the misdeeds of our fathers, from those we ourselves have committed Set Vasistha free, O king,

* Mbh reads क्रियाग्रहणमपि कर्त्तव्यम्

like a cattle stealing thief, like a calf from the rope Av tarad means to steal (Middle Persian tirft)

उदुब्बलौ—occurs only here in RV Its meaning and derivation are uncertain Prof Suniti Kumar Chatterji is inclined to think that the second element is dumba which is evidently connected with the Iranian group, cf Av duma, Pahlavi and Modern Persian dum, dumb, tail It appears also in Old High German as Zumpfo Thus उदुम्बर or उदुम्बल may mean 'with tail uplifted' A parallel form is उदुम्बर from which is derived Bengali डुमुर

जनाँ—For nasalisation see p 187

इषध्यै—Dat infinitive Similar other forms are युधध्यै to fight, सनध्य to win मदध्यै to rejoice, तुजध्यै to breed — V G S, p 192, 2 इषे is also used in the same sense 'इषे विश्वे च।'

सूर्याय—The Dat is due to case attraction as in x 125 6 V G S p 315, 4

दाताम्—3 dual root aorist imperative of दा to give, the corresponding present form is दत्ताम्

असुम्—life, from अस to be, to exist In the earlier language it is singular And because it is sing, S paraphrases it by प्राणम् in the sing in the sense of प्राणवायु, cf प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वम् S under B S i 10 3 Since however, असुतृपो is dissolved with असु in the pl (see AVS) S uses the pl form there Av ahu life force, Acc sing ahu m

13

| | |
|---|---|
| यमाय सोमं सुनुत | यमाय सोमम् सुनुत |
| यमाय जुहुता हविः[1]। | यमाय जुहुत हविः। |
| यमं ह यज्ञो गच्छ- | यमम् ह यज्ञः गच्छति |
| त्यग्निदूतो अरंकृतः ॥१३॥ | अग्निऽदूतः अरम्ऽकृतः ॥१३॥ |

[1] AV reads सोम पवते क्रियते हविः

For Yama (*Yamā́ya*) press (*sunuta*) the Soma (*sómam*), to Yama (*Yamā́ya*) offer (*juhuta*) the oblation (*havíḥ*). The sacrifice (*yajñáḥ*) of which Agni is the messenger (*agnídūtaḥ*) and which is perfectly prepared (*áram-kṛtaḥ*) goes to Yama (*Yamáṃ ha gacchati*)

हे ऋत्विजः, **यमाय** यमदेवतार्थं सोमं सुनुत लतात्मकं सोममभिषुणुत । तथा [**यमाय**] यमार्थं हविः जुहुत । अग्निर्दूतो यस्मिन्यज्ञे सोऽयम् अग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातम्* । 'अग्निर्देवानां दूत आसीत्' [तै° सं° २।५।८।५] इति । अरङ्कृतः बहुभिर्द्रव्यैरलङ्काररूपैर्युक्तः । तादृशो यज्ञो यमं ह यममेव गच्छति ॥१३॥

यमाय देवाय सोमः पवते पूयते अभिषूयते सोमयागे यजमानैः । कर्मणि कर्तृप्रत्ययः । शप् । पूधातोः । सोमसाधनो ज्योतिष्टोमादिरननुष्ठितश्चेद् यमो नरके पातयिष्यतीति भिया यमप्रीतये सोमोऽभिषूयत इत्यर्थः । अथवा पितॄणां सोमसम्बन्धेन यमस्यापि सोमोऽस्त्येव । किं च **यमाय एव हविः** आज्यादिलक्षणं क्रियते संस्क्रियते उत्पवनादिसंस्कारेण । किं च **यमं ह** यममेव यज्ञः कृत्स्नो ज्योतिष्टोमादिः गच्छति । कीदृशो यज्ञः ? अग्निदूतः । दूतो यथा स्वामिना दत्तं धनादिकं दातव्याय प्रयच्छति, एवमग्निरपि यजमानेन दत्तं हविस्तस्मै तस्मै देवाय प्रयच्छतीत्यग्निर्दूत इत्यभिधीयते । अलंकृतः स्तोत्रशस्त्रादिभिर्भूषितः । यद्वा, अलमत्यर्थं निष्पादितः, साङ्गोपाङ्ग इत्यर्थः । यद्यपि सोमो हविश्चोभे सर्वार्थं क्रियेते तथा यज्ञोऽपि सर्वदेवार्थः, तथापि यमस्य सर्वप्राणिसंहर्तृत्वेन वा सर्वेषां पितृलोकप्रापकत्वेन वा प्राधान्याद् यमायैव सोमादिकं क्रियत इत्युपचर्यते ॥१३॥

जुहुता—the regular form of the Imperative second plural is used here with metrical lengthening The irregular forms जुहोत. and जुहोतन are used in the next two stanzas "तप् तनप तन थनाय ।" P 7.1 45.

---

* The correct reading would appear to be अन्यत्राप्याम्नातम्

यमम्—*cf.* स इद्देवेषु गच्छति i. 1. 4 (p. 32).

अभिद्रुत—*cf.* अथा यमस्य सादनमभिद्रुतो अरंकृतः AV. ii. 12. 7 where S. says: अभिद्रुत. ..बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अरंकृत. अलंकृतः। ... "बालमूललघु-लमङ्गुलीनाम्°" [८।२।१८ भा°] इति रत्वविकल्पः। भूषणेऽलम् [१।४।६४] इति गतिसंज्ञायां "गतिरनन्तरः" [६।२।४९] इति गतेः प्रकृतिस्वरत्वम्। See under i 1. 6, p. 38

14

| | |
|---|---|
| यमाय घृतवद्धवि- | यमाय । घृतऽवत् । हविः । |
| र्जुहोत प्र च तिष्ठत । | जुहोत । प्र । च । तिष्ठत । |
| स नो देवेष्वा यम- | सः । नः । देवेषु । आ । यमत् । |
| द्दीर्घमायुः प्र जीवसे ॥१४॥ | दीर्घम् । आयुः । प्र । जीवसे ॥१४॥ |

To Yama (*Yamā́ya*) offer (*juhóta*) the oblation (*haviḥ*) rich in ghee (*ghṛtávat*) and step forward (*pra ca tiṣṭhata*), may he lead (*saḥ ā́ yamat*) us (*naḥ*) to the gods (*deveṣu*) so that we may live (*pra jīvase*) a long life (*dīrgham ā́yuḥ*)

हे ऋत्विजः, यूयं यमाय घृतवत् आज्येन संयुक्तं हविः पुरोडाशादिकं जुहोत जुहुत। प्र च तिष्ठत। यमं यूयमुपतिष्ठध्वम्। देवेषु मध्ये स यमो देवः प्रजीवसे प्रकृष्टजीवनार्थं नः अस्माकं दीर्घमायुः आयमत् प्रयच्छतु ॥१४॥

यमः . आयमत्—Note the play on words

जुहोत प्र च तिष्ठत—occurs also in i 15 9 where it is "abrupt, perhaps parenthetic . *On the other hand the good old Yama hymn shows the repeated pāda in a connexion whose patness* and originality are very evident' *Rigveda Repetitions*, Vol I, p 49.

जुहोत—irregular strong form. *cf.* जुहोतन in the next stanza. The regular form is जुहुत "तप् तनप् तन थनाश्च।"

देवेषु—See p 32, V. G S., p 204 *b*.

आ यमत्—inj of root aorist of आ यम्. Earlier scholars translated: May he bestow, etc., but Oldenberg pointed out that the object of आयमत् is नः, and not आयुः He compares ix. 44. 5 स नो भगाय वायवे विप्रवीरः सदावृधः । सोमो देवेष्वा यमत् ॥ "May Sóma ever bringing power to Bhaga and to Vāyu, sage and hero, lead us to the gods"

आयुः—Cognate Acc

जीवसे—Dat infinitive *Cf.* दीर्घमायुः करति जीवसे वः x 18. 6.

15

| | |
|---|---|
| यमाय मधुमत्तमं | यमाय । मधुमत्ऽतमम् । |
| [1]राज्ञे हव्यं जुहोतन । | राज्ञे । हव्यम् । जुहोतन । |
| इदं नम ऋषिभ्यः पूर्वजेभ्यः | इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । |
| पूर्वेभ्यः पथिकृद्भ्यः ॥१५॥ | पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥१५॥ |

Offer (*juhotana*) oblation (*havyam*) most rich in mead (*madhumattamam*) to Yama (*Yamāya*) the king (*rājñe*) This obeisance (*idam namaḥ*) to the seers (*ṛṣibhyaḥ*) born of old (*pūrvajebhyaḥ*), the former (*pūrvebhyaḥ*) makers of the path (*pathikṛdbhyaḥ*).

हे ऋत्विजः, यमाय राज्ञे मधुमत्तमम् अतिशयेन मधुरं हव्यम् पुरोडाशादिकं हविः जुहोतन जुहुत । पूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्योऽत एव पूर्वेभ्यः असमत्तः पूर्वभाविभ्यः पथिकृद्भ्यः शोभनमार्गकारिभ्यः ऋषिभ्यः इदं प्रत्यक्षं यथा भवति तथा नमः अस्तु ॥१५॥

---

[1] AV. reads जुहोता प्र च तिष्ठत

अत्रापि पूर्वमन्त्रवद् यमस्य प्राधान्याभिप्रायेण होमप्रतिष्ठे तस्यैव कर्त्तव्ये इत्यभिधीयते। हे यजमानाः यमाय एव देवाय **मधुमत्तमम्** अतिशयेन मधुमत् सोमाज्यादिकं हविः **जुहोत** जुहुत। 'तप्तनप्'' [७।१।४५] इति तस्य तबादेशे गुणः। **प्र च तिष्ठत**। प्रतिष्ठां समाप्तिं यमायैव कुरुत। ननु यमायैव हूयते तत्सहचारिणां पितृणां किं स्यात् इत्याशङ्क्य तेषां नमस्कारः क्रियत इत्याह—**इदं नमः** इति। **ऋषिभ्यः** मन्त्रादिद्रष्टृभ्यः अङ्गिरःप्रभृतिभ्यः। 'ऋषिर्दर्शनात्। स्तोमान् ददर्शेत्यौपमन्यवः' [नि° २।११] इति निरुक्तम्। 'तद् यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् त ऋषयोऽभवंस्तदृषीणामृषित्वम् इति विज्ञायते' [नि° २।११] इति च निरुक्तम्। ऋषयो विशेष्यन्ते। **पूर्वजेभ्यः** पूर्वमुत्पन्नेभ्यः। इदानीन्तन-यजमानापेक्षया तेषां पूर्वजत्वम्। अत एव **पूर्वेभ्यः पथिकृद्भ्यः**। [पथिकृतः पितृलोकस्य पथां कर्त्तारः। ये प्रथमं परेताः स्वर्गमार्गाणां दर्शयितारस्ते पथिकृतः पितृ]गणगताः, तेषां मार्गाणामिदानीन्तनैरप्यनुस्रियमाणत्वात्। एवं महानुभावेभ्यः ऋषिभ्यः अङ्गिरःप्रभृतिभ्यः **इदं नमः** नमस्कारः अस्तु ॥१५॥

पूर्वजेभ्यः—These four syllables convert the Anustup of 32 syllables into the Brhati of 36 syllables. "भष्टाक्षरास्त्रयः पादास्तृतीयो द्वादशाक्षरः।" Is this word a later addition ?

## 16

| | |
|---|---|
| त्रिकद्रुकेभिः पतति[1] | त्रिऽकद्रुकेभिः। पतति। |
| षळुर्वीरेकमिद्बृहत्। | षट्। उर्वीः। एकम्। इत्। बृहत्। |
| त्रिष्टुब्गायत्री छन्दांसि | त्रिऽस्तुप्। गायत्री। छन्दांसि। |
| सर्वा ता यम आहिता ॥१६॥ | सर्वा। ता। यमे। आऽहिता ॥१६॥ |

[1] AV. reads पतति as यम भार्पिता.

त्रिकद्रुकेभिः। द्वितीयार्थे तृतीयैषा। त्रिकद्रुकान् ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यन्ते। तान् प्रत्यङ्गभावाय संरक्षणार्थञ्च पतति यमस्तान् प्राप्नोति। [षट्] षट्संख्याका उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति। ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः—'षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता च' [आपस्तम्बश्रौ° सू° ६।२२।१] इति। एकमित् एकमेव बृहत् महज्जगद्यमश्च* प्रतिपालनाय† प्राप्नोति। किञ्च यानि त्रिष्टुब्गायत्र्यादीनि छन्दांसि सन्ति सर्वा सर्वाणि [ता] तानि छन्दांसि यमे आहिता आहितानि। ऋत्विग्भिः स्तुतित्वेनावस्थापितानि‡ ॥१६॥

त्रिकद्रुकेभिः त्रिकद्रुकैः। ज्योतिष्टोमगोष्टोमायुष्टोमाख्यास्त्रिकद्रुका इत्युच्यन्ते। तैर्निमित्तभूतैस्तेषां निष्पत्तये पवते पूयते यमार्थमभिपूयते। सोम इति शेषः। ज्योतिष्टोमादीनामननुष्ठाने यमो हनिष्यतीति भीत्या तेषु सोमोऽभिपूयत इत्यर्थः। तथा षडुर्वीः षडुर्व्यः। षण्मोर्वीरंहसस्पान्तु [शाङ्खायनश्रौ° १।६।४] इत्यत्राम्नानाद् द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च एताः षडुर्व्यः। ता अपि एकम् इत् एकमेव बृहत् महान्तं यमम्। उद्दिश्यैव प्रवर्तन्त इति शेषः। अथवा बृहदित्युत्तरत्रान्वेति। बृहत् बृहतीछन्दः, तथा त्रिष्टुब्गायत्रीतिच्छन्दांसि। ता तानि इतराणि [सर्वा सर्वाणि] छन्दांसि यमे आर्पिता आर्पितानि पर्यवसितानि। छन्दोभिरुपलक्षिताः सर्वे मन्त्रा यमैकविषया इत्यर्थः। 'ऋ गतौ' [धा° ३।१६], 'अर्तिह्री°' [७।३।३६] इत्यादिना पुगागमः। 'जुष्टार्पिते च च्छन्दसि' [६।१।२०९] इत्याद्युदात्तत्वम् ॥१६॥

---

* M notes the variants: बृहत् महत् जगमश्च (Peterson)। बृहद्गमाय। बृहत् जङ्गमश्च। S. evidently gives महत् as the primary meaning and जगत् as the secondary meaning of बृहत् and supplies the Nom. यमः.

† प्रतिपालनीय.—M. B. Peterson, but प्रत्यङ्गभावाय and प्रत्यवेक्षणाय show that a तादर्थ्ये चतुर्थी is necessary here also.

‡ °वस्थितानि—M. B. Peterson, but आहित does not mean स्थित but स्थापित.

The sense of the stanza is not clear Wilson translates Yama acquires the three Trikadruka sacrifices , the six earths the one great moving world, the Tristup, Gayatri, all the sacred metres converge in Yama Griffith translates "Into the six Expanses flies the *Great One* in *Trikadrukas* The *Gayatri* the Tristup all metres in Yama are contained", and remarks "The meaning appears to be that the Great Unit, Yama as All God, broadens and fills the universe after plentiful libations of Soma juice in the three Kadruka days or first three days of the Abhiplava festival ' Oldenberg suggests With three Kadrukas flies (Yama?) The six wide ones, the one Brhat, the Trstubh etc , all this is contained in Yama (beigelegt) Macdonell translates "It flies through the three Soma vats The six earths, the one great (world), trstubh gāyatri and (the other) metres, all these are placed in Yama" and remarks "The first probably means that the Soma draught is ready for Yama , the second expresses the greatness of Yama by stating that all things are contained in him ' Thomas translates "With the three Soma bowls he flies The six are wide, and one is great or the one great (Brhat metre) flies through the six wide (heavens) Trstubh Gayatri metres all they all in Yama are contained ' and adds in a foot note "The verse is probably a riddling expression of the theory that the metres are a constituent part of the cosmos as *they* were used in the primeval sacrifice by which the world was formed

त्रिकद्रुकेषु—अभिप्लवाह पूर्वस्त्रिकद्रुका इत्याचचते—Sk and V M Acc to Geldner त्रिकद्रुक is perhaps the name of a Soma ceremony (later the first three days of a six day ceremony) or of a locality Geldner draws attention to अपिबत् कद्रुवः सुतम् viii 45 26

पतति—flies , Lat *peto* I fly The subject is probably सोम (see S on AV ) In ix 3 1 एष देवो अमर्त्यः पर्णवीरिव दीयति। अभि द्रोणान्यासदम् ॥ here the immortal God flies like a bird to settle in the vats' Soma is said to fly

षट् उर्वी—Acc to Geldner, the three heavens and the three earths

## AKSA

### *Introductory Notes*

Dicing and racing were two of the chief amusements of the Vedic Indian And even at the early period dicing was fully recognised as a व्यसन In the present hymn—the finest of the four secular hymns in RV —a gambler who has been disillusioned too late relates his sad experiences in the most realistic terms The dice episode in the Mahābhārata proper, as also in the Nalopākhyana, may be regarded as commentaries on this text

Very different views have, however, been held regarding the true character of the hymn Acc to Schroeder it is a drama in the form of a monologue Charpentier holds that it was composed for didactic purposes Oldenberg is of opinion that it is a hymn which is connected with the making of gifts (*cf* 12c, they could have been meant as gifts for the Brāhmanas) by means of which the gambler seeks to free himself from the bonds of the demon of dice Winternitz thinks it more probable that this soliloquy of a gambler is part of a ballad, in which some epic story was told like that of Yudhisthira or Nala

'The dice appear normally to have been made of Vibhidaka nuts, hence they are called brown (बभ्रु), and born on a windy spot (प्रवाते जा) In RV the dicer is described as a leader of a great horde (सेनानीर्महतो गणस्य) and in another passage the number is given as त्रिपञ्चाश [consisting of three fiftus] The game consisted in securing even numbers of dice, usually a number divisible by four, the Krta the other three throws then being the Tretā, when three remained over after division by four, the Dvāpara, when two was the remainder, and the Kali, when one remained [It is interesting to note that the names of the four Yugas in later literature can be connected with these four

throws ] The number of dice used was certainly large, and the reference to throwing fours and losing by one, points to the use of the Krta as the winning throw

"No board appears to have been used, but a depression on which the dice were thrown (अधिदेवन AV v 31 6, देवन RV x 43 5 इरिण), was made in the ground No dice box was used, but reference is made to a case for keeping dice in (अक्षावपन SB v 3 1 11) The throw was called ग्लह (AV iv 38 1) or earlier आय (RV. viii 81 1, ix 106 3) " *Vedic Index*, Vol I, pp 2 5

## Hymn No. 9

### AKSA

x 34

म० १० सू० ३४

ऐलूष कवष ऋषि, मूजवत्पुत्रोऽक्षो वा । १, २ ७ १२—अक्षा देवता ।
२, ४ ६, ८ ११, १४ कितव अक्षाश्च देवता । १३—कृषिर्देवता ।
१ ६, ८ १४ त्रिष्टुप् छन्द । ७—जगती ।

1

| | |
|---|---|
| प्रावेपा मा बृहतो मादयन्ति | प्रावेपाः । मा । बृहतः । मादयन्ति । |
| प्रवातेजा इरिणे वर्वृतानाः । | प्रवातेऽजाः । इरिणे । वर्वृतानाः । |
| सोमस्येव मौजवतस्य भक्षो | सोमस्यऽइव । मौजऽवतस्य । भक्षः । |
| विभीदको जागृविर्मह्यमच्छान् ॥१॥ | विऽभीदकः । जागृविः । मह्यम् । अच्छान् ॥१॥ |

The trembling [products] (*pravepa'h*) of the tall [tree] (*br'hatah*) born in a windy place (*pravate ja'h*) exhilerate (*madayanti*) me (*ma*) as they roll over and over again (*varvrtā nah*) on the dice board (*irine*) Like a draught (*bhaksah iva*) of Soma (*somasya*) growing on Mt Mujavat (*maujavatasya*) the animating (*ja'grvih*) Vibhidaka (*vibhi daka*) has pleased (*acchan*) me (*mahyam*).

प्रावेपा इति चतुर्दशर्चं पञ्चमं सूक्तमैलूषस्य[1] कवषस्यार्षं मूजवतः पुत्रस्याक्षस्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः। अत्र द्वादश्यक्षान् स्तौति नवम्याद्या च। अतस्तास्तद्देवत्याः। सप्तमी त्रयोदशी च कृषिं स्तौति। अतस्तयोः सा देवता। एवं पञ्च गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः*। तथा चानुक्रान्तम्—'प्रावेपा पञ्चूना मौजवान्नाक्षोऽक्षकृषि-प्रशंसा चाक्षकितव-निन्दा च सप्तमी जगती' इति। गतो विनियोगः॥

---

[1] ऋग्वेदस्य दशममण्डलान्तर्गतस्य सूक्तत्रयस्य द्रष्टा इलूषनन्दनः कवषो नाम महर्षिः। स मित्रातिथि समाख्यस्य राज्ञस्तत्पुत्रस्य चोपमश्रवसः पुरोहित आसीत् इति दशममण्डलान्तर्गत त्रयस्त्रिंशात् सूक्तादवगम्यते। "ऋषयो वै सरस्वत्यां सत्रमासत, ते कवषमैलूषं सोमादनयन् —दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्ट इति" [ऐ° ब्रा° ८।१] इत्यैतरेय श्रुतेस्तस्य दासीगर्भसम्भूतत्वं कितवत्वञ्च प्रतीयेते। गर्भप्रभावस्यानतिक्रमणीयत्वात् तस्याक्ष क्रीडायां प्रसक्तिः समजनि, तत्र च हृतसर्वस्व मात्रादिस्वजनगणैरपि निर्घृण परित्यक्त 'प्रावेपा' इति सूक्तेन परिदेवयाञ्चक्रे।

* From a collation of the different readings in the MSS of M M the following would appear to be the correct text of S s Bhasya here अत्र द्वादश्यक्षान् स्तौति नवम्याद्या च सप्तमी, अतस्तास्तद्देवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च गताः शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः। (See M M , Vol IV Varietas Lectionis p 11)

This is evidently based on Sadgurusisya s commentary on the *Sarvanukramani* where we find

एलूषः कवषः ऋषिः। अथवाक्षो नाम मौजवान् मूजवत्पुत्रः। अपत्येऽपि तस्य लोपेऽप्यादिवृद्धिः। "गर्ह्येः [श्रा° श्र° सू° २।३।४] सौविष्टकृतः" इति यथा। अत्र पक्षे कृषि प्रशंसा च क्रियतेऽक्षकितवनिन्दा च क्रियते।

तत्राक्षान् द्वादशी स्तौति नवम्याद्या च सप्तमी।
त्रयोदशी कृषिं स्तौति कितवं चानुशास्तीति।
शिष्टाभिर्नवभिस्त्वक्षा कितवश्चैव निन्द्यते॥

In Macdonell s edition this is read as prose with चानुशास्ति in the second line and निन्द्यन्ते in the third But it is a well known fact that Sadgurusisya is very fond of metrical explanations and

बृहतः महतो विभीदकस्य फलत्वेन सम्बन्धिनः प्रवातेजाः प्रवणे देशे जाता इरिणे आस्फारे वर्वृतानाः प्रवर्तमानाः प्रावेपाः प्रवेपिणः कम्पनशीला अक्षा मा मां मादयन्ति हर्षयन्ति । किञ्च, जागृविः जय-पराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः विभीदकविकारोऽक्षो मह्यम् माम्

---

the first two lines are, in this particular instance, quoted from the *Bṛhaddevata* (vii 36 37) where we find

प्रावेपा इति सूक्ते यत्तदक्षस्तुतिरुच्यते ।
अक्षाद्यान् द्वादशी स्तौति नवम्याद्या च सप्तमी ॥
त्रयोदशी कृषि स्तौति कितवं चानुशासति ।
अर्चास्तु शेषा निन्दन्ति ॥

For अक्ष in the second line there is the v l तत which is also the reading of Sadguruśiṣya अनुशासति in the third line *is evidently* an आर्ष प्रयोग and the च shows that it cannot be changed into अनुशासती as suggested by M M and अनुशास्ति will spoil the metre कितवमनुशासती would have both the second and third syllables short *In the fourth line* निन्दन्ति *is quite correct but in* Ṣadguruśiṣya s commentary निन्दति is the proper reading and not निन्दन्ते which is prejudicial to the metre The singular need not cause us any anxiety as the verb often agrees with the subject nearest to it (*cf* आदित्यचन्द्रावनिलोऽनलश्च धर्मश्च जानाति नरस्य वृत्तम् )

What has happened in *the present case appears to be this* Because of the word अनुशासति in the *Brhaddevata*, Sadguru's second line was in prose which must have led to the idea that the first line was also in prose, a conviction strengthened by the fact that in अक्ष द्वादश्यचान् स्तौति the *fifth syllable is metrically long* *And* since च *generally* makes the end अक्ष नवम्याद्या च was *regarded* as the first sentence and सप्तमी was thought to be a part of the next one As सप्तमी त्रयोदशी कृषि स्तौति would not do in prose a च was inserted after त्रयोदशी Now since we have both the त्रयोदशी and the सप्तमी we must have a pronoun in the dual to represent them and so अक्षस्तुत्या सा देवता was changed into अक्षस्तुती सा देवता

अच्छान् अचच्छदत् अत्यर्थं मादयति। अत्र दृष्टान्त —सोमस्येव यथा सोमस्य मौजवतस्य मूजवति पर्वते जातो मौजवत तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः पानं यजमानान्देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्क —'प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति। प्रवातेजा[1] प्रवणेजा इरिणे[2] वर्तमाना इरिणं निर्ऋणमृगातेरपार्णं भवति, अपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकया। इषीकेषतेर्गतिकर्मण, इयमपीतरेषीकैतस्मादेव। विभीदको विभेदनात्, जागृविर्जागरणात्, मह्यमचच्छदत्'[3] [4][नि॰ ९।८] इति ॥१॥

प्रावेपा—The word occurs only here It is derived from प्र with विप 'to tremble' with the agent suffix अव and means dangling It is an adjective used as a noun here For प्रावेपा MS reads प्रकाशो Lengthening of the preposition as in the case of प्रावृष Neither प्रावृष nor प्रावेपा is analysed in the Pada text

बृहत —Gen sing of बृहत् of the big (vibhidaka tree, the fruits). The Vibhidaka or *Terminalia Bellerica* is a very large and spreading tree rising to a height of 60 to 100 feet

प्रवातेजा —Panini s rules for अलुक before ज in classical Sanskrit are (i) प्रावृट शरत् काल दिवा जे and (ii) विभाषा वर्षक्षरशरावरात् It is well-known that the Vibhidaka tree grows in windy places and the nuts produce a rattling sound when the wind passes through them

इरिणे—In Vedic literature the word means 'a cleft in the ground' usually natural As the dice were thrown on a space

---

[1] प्रचुरवाते स्थाने काले (i e , प्रावृट्काले) वा जाता । D

[2] इरिणे वर्तमाना निर्गतर्णे आस्फुरकस्थाने वर्तमाना । न हि तत्र पुत्रपौत्रानुगम्यं भवति। अथवा अपार्णम् अपगतोदकम्। D इरिण निरुदके असारप्रदेशे पर्वतानाम्। SK M

[3] D gets over the apparent tautology by explaining मादयन्ति as हर्षयन्ति वा तर्पयन्ति वा and अच्छान् as स्वेन फलशब्देन सर्वार्थेषु पुन पुन भृश वा मनश्छादयित्वा देवने एकैकस्मिन् मम मन उत्साहयति।

[4] 'प्रत्यृतेनान् (i e , अक्षान्) प्रथमया निन्दत्युत्तराभि । ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते।' is the end of the quotation

dug out, that was called इरिण as being a space dug out, though not natural (*Vedic Index*) So इरिण came to mean the dice board (फलक) In classical Skt it generally means a sterile tract (*cf* Manu ii 113 आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत्)

वर्वृताना —intensive part of वृत् 'to turn'

मौजवतस्य*—growing on Mt Mujavat, also known as Muñjavat, a mountain in the Himālayas In the *Vajasaneyi Saṁhita* iii 61 Rudra is asked to go beyond Mt Mujavat (परो मूजवतोऽतीहि। Uvata—मूजवान्नाम पर्वतो भगवतो रुद्रस्य वसति । तमतीत्य गच्छ।)

The following stanza (RV v 85 2) expressly declares that the plant grew on mountains

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु।
हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात् सोममद्रौ॥

'In the tree tops the air he hath extended, put milk in kine and vigorous speed in horses

Set intellect in hearts, fire in the waters, Surya in heaven and Soma on the mountain †

In AV. iii 21 10 also we read ये पर्वता सोमपृष्ठा

In Yasna x of the Avesta we find I praise the clouds that water thee, and the rains which make thee grow on the summits of the mountains, and I praise the lofty mountains

---

* In the Padapātha मौजवत is analysed (मौजऽवत) because मौज consists of two syllables but सौमन सौमनस etc are not analysed, because the first member which has undergone वृद्धि and which ends in a vowel consists of only one syl

अवग्रह्यात् पदाद् यत्र तद्धितो वृद्धिमान् भवेत्।
एकाज् वृद्धिस्वरान्तस्तु न तत्रावग्रहो भवेत्॥

वैवस्वत is not analysed because विवस् is not a पद but स before the suffix मतुप्

† पर्वतपाषाणसन्धिषु सोमवल्ली उत्पद्यमानत्वादद्रौ सोमस्थापनमुक्तम्। महीधर on VS iv 31

where the Haoma (सोम) branches spread (3) Swift and wise on high Haraiti did he the well skilled plant thee (10), the birds have carried thee to the Peaks above-the Eagles, to the mount's extremest summit, to the gorges and abysses, to the heights of many pathways, to the snow peaks ever whitened (13)"

The Soma that grows on Mt Mujavat is generally regarded as the best In the *Suśruta Saṃhitā* Muñjavan Soma is described thus कदल्याकारकन्दस्तु मुञ्जवाँल्लशुनच्छद, *i e*, Muñjavan Soma has got its bulb like that of the plantain tree and its leaves are like those of the garlic

Soma is thus described in *Suśruta* Cikitsāsthāna, 29 20 ff

सर्वेषामेव सोमानां पत्राणि दश पञ्च च।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च॥
एकैकं जायते पत्रं सोमस्याहरहस्तदा।
शुक्लस्य पौर्णमास्यां तु भवेत् पञ्चदशच्छदः॥
शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः।
कृष्णपक्षक्षये चापि लता भवति केवला॥

In the *Caraka Saṃhita* we read सोमो नामौषधिराजः पञ्चदशपर्वा, स सोम इव हीयते वर्धते च। चिकित्सास्थान १।४।६।

In the Avesta the Divinity Haoma is mentioned in close connexion with Haoma the plant In fact it would not be too far wrong to say that he was responsible for introducing the Haoma cult among the Aryans, and it is very likely that the plant used at the sacrificial ritual derived its name from him He is specially distinguished by his epithets *duraoša* (of far spreading radiance) and is also called *frasmi* (the Renovator) In another place he is called *xšaθrya* (क्षत्रिय),—the King, which reminds one of the Ved सोमो राजा It is notable also that though the majority of the epithets used for Haoma the Divine Being are such as can be only applied to the Plant

by a stretch of imagination still there are two at least used in Yas ix 16 (*zairigaonō*, हरिगुण of golden colour and *namyansuš* नमांशु with bending twigs) and one in Yas lvii 19 (*zairi doiθro* with golden eyes) which can only apply to the plant " TARAPOREWALA, *Selections from the Avesta*, p 14

Attempts have been made to identify Soma with what is popularly known as *bhang* but without much success (See *Indian Historical Quarterly*, Vol X 1939) It is generally known as *Acida Vulgaris*

भव —सोम is here regarded as an article of food, hence the भव is used with it (*cf* भक्षस वाजुभव, etc), ordinarily we should expect पीथम् or पानम् with सोम

विभीदक —(later also विभीतक) a large tree, the *Terminalia Bellerica*, the nut of which was used in dicing hence by Synecdoche, dice The Prakrit form is बहेडय (*cf* Hemacandra i 88, 105 206) from which we have बहेडा in Bengali The cerebralization here, is difficult to explain

जागृवि —is formed with the agent suffix क्विन् from जागृ to keep awake' (the reduplicated form of गृ 'to wake') acc to the unadi rule जुयुजुजागृभ्य क्विन् iv 54 and generally means जागरूक (awake watchful), here it means that which keeps one awake यो जयति स हर्षेण जागर्ति, योऽपि जीयते स दुःखेन जागर्ति। D

मह्यम्—dative in connexion with अच्छान् Verbs meaning to please, 'to be sweet to take the Dative

अच्छान्—3 sing s aor of छन्द 'to please *a chand s t* > *acchand s t* > *a cchan* (the tense sign *s* the ending *t* and the final of the root being dropped) Similarly from *krand* we have *akran* V G S, p 164 5 छन्दति is read among the synonyms of अर्चति in *Naigh* iii 14

पूर्वार्धे प्रतिपादितस्य मादकस्य प्रकार उपमानाद्वयेन काव्यलिङ्गयोगेन चोत्तरार्धे समर्थित इति न पुनरुक्तिदोषस्यावकाश ।

2

| | |
|---|---|
| न मा मिमेथ न जिहीळ एषा | न \| मा \| मिमेथ \| न \| जिहीळे \| एषा । |
| शिवा सखिभ्य उत मह्यमासीत् । | शिवा \| सखिऽभ्य \| उत \| मह्यम् \| आसीत् । |
| अक्षस्याहमेकपरस्य हेतो | अक्षस्य \| अहम् \| एकऽपरस्य \| हेतो । |
| रनुव्रतामप जायामरोधम् ॥२॥ | अनुऽव्रताम् \| अप \| जायाम् \| अरोधम् ॥२॥ |

She (*eṣa´*) did not revile (*na mimetha*) me (*ma*) she was not angry (*na jihile*) She was gracious (*śiva´*) to my friends (*sakhibhyah*) and (*uta*) to me (*mahyam*) For the sake (*hetoh*) of a die (*aksasya*) exceeding by one (*ekaparasya*) I have repulsed (*apa arodham*) a devoted (*anuvratam*) wife (*jaya´m*)

एषा अस्मदीया जाया मा मां कितव न मिमेथ न च चुक्रोध न जिहीळे न च लज्जितवती[1]। सखिभ्य अस्मदीयेभ्य कितवेभ्य शिवा सुखकरी आसीत् अभूत्। उत अपि च मह्य शिवासीत्। इत्थम् अनुव्रताम् अनुकूला जायाम् एकपरस्य एक पर प्रधान यस्य तस्य अक्षस्य हेतो कारणादहम् अपारोधम् परित्यक्तवानसीत्यर्थ ॥२॥

His wife was an ideal Hindu wife who put up with his peccadilloes and his boon companions of the gaming table with exemplary patience for a long time but in his insane passion for gambling he was infuriated even by her gentle remonstrances and drove her away (Or he might have staked his wife like Yudhisthira and lost her Or he might have like King Nala, asked his wife to go to her father s house)[2]

[1] Sayana or the scribe evidently confuses the root हेड here with ह्री Moreover लज्जितवती though used by many writers is grammatically indefensible

[2] " who plays for more
Than he can lose with pleasure stakes his heart,
*Perhaps his wife s too*, and whom she hath bore "

मिमेथ—Yāska says मेथतिराक्रोशकर्मा, *i.e.*, the root मिथ् means to revile; to reproach. This sense appears clearly in, for instance, न पूषणं मेथामसि सूक्तैरभि गृणीमसि RV. i. 2. 10 we do not revile Pūsan but praise him with hymns and अथाप्यर्यः कुमारीमभिमेथति ... तं कुमारी प्रत्यभिमेथति SB. xiii. 5. 2. 4. In न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे i. 113. 3. "Fair-formed, of different hues and yet one-minded, Night and Dawn clash not, neither do they tarry" S. explains मेथते as हिंस्तः, but Skandasvāmin and Venkatamādhava explain it as आक्रोशतः. The root is read in the Dhātupātha as मेथृ मेधाहिंसनयोः, *i.e.*, मेथ् means 'to unite' and 'to kill.'

Acc. to philologists *the root* मिथ् *means to change, exchange, alternate, thence to engage in altercation on the one hand and to associate on the other.* Hence in Sanskrit मिथः means reciprocally, mutually, together (मिथोऽन्योन्यं रहसि) which the very same word appearing as *miθō* in Av. means preposterously, falsely—senses which are expressed in Sanskrit by the cognate words मिथु, मिथुया (Vedic) and मिथ्या (classical). Av. *miθwa-*, *miθwana-*, *miθwara-* means paired, united in a pair Skt *mithuna*, paired, pair. The root appears in Latin as *mūtare* to alter, change (*cf* *mūtatis mūtandis* with the necessary changes). The English prefix *mis-* (in *mis-deed*, Goth *missa-dēds*, Modern German *Misse-tat*) is, acc to some, *from the same root.*

जिहीळ is read in the *Nighantu* in the list of roots meaning to be angry (क्रुध्यतिकर्मन्) and the noun हेळ among the synonyms of anger In the Dhātupātha we find हेड् अनादरे. Sāyana generally takes हेड् in the sense of अनादर following the Dhātupātha or क्रोध following the *Nighantu*. Here since he explains मिमेथ as चुक्रोध he is forced to explain जिहीळे *as* लज्जितवती *following* the *dictum* अनेकार्था हि धातवः *If the reading be correct the sense* evidently is that she was *neither* प्रगल्भा *enough to be angry* with her husband nor मुग्धा *enough to shrink from him.* If Sāyana really wrote लज्जितवती he was probably thinking of *Śiśupālavadha II. 44*, or he might have meant that she was not ashamed

of having a gambler for her husband It is however, just possible that the correct reading of Sayana s commentary here is न चातुकोश न जिह्रीळे न च परिभूतवती

Av *zoizdista* most horrible the superl of **zoižda* is from the same root The English word ghost, ghastly are cognate The root like the preceding one is exclusively Vedic In classical Skt we have हेला carelessness levity

एवा—सर्वनाम्नाम् उत्सर्गतो बोद्धपरामर्शकत्वम् इति एतच्छब्देनाव पत्नी निर्दश ।

शिवा—शिव (= Germanic *hiwa*) and शेव (Germ **hiwa*) are derived from the root शी to lie down with the suffix व The antonym of शिव is घोर or अशिव cf x 124 2 शिव चेत् सन्तमशिव जहामि स्वात् सख्यादरणीं नाभिमेमि while I ungracious one desert the gracious leave mine own friends and seek the kin of strangers

सखिभ्य—adjectives like शिव चारु हित etc meaning kind, gracious dear agreeable etc are construed with the Dativ V G S p 318 शिवा पशुभ्य सुमना सुवर्चा x 85 44 Cf Av *yahmai asava frya* to whom the just man (was) a friend Yasna xlvi 6 *yə asau ıe vahısto* who is very good to the just man Y xxx ii 3

अक्षस्य etc—he find too late that he has been विचारमूढ Cf अन्यस्य हृतार्थेन द्यूतविक्रम् विचारमूढ प्रतिभासि मे त्वम् *Raghu* II 47

एकपरस्य—The स्वरोच्चारणत्व of एकपर would appear to be irregular as both in बहुव्रीह (एक परो यस्य) and in तृतीया तत्पुरुष (एकेन पर) it is the first member that is to retain its normal accent बहुव्रीहौ प्रकृत्या पूर्वपदम्। तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या । P 6 2 12) The *avyayibhava* compound एकपरि formed acc to अक्षशलाकासंख्या परिणा P 2 1 10 would be accented on the last syl acc to समासस्य The throw here referred to is Kali (the worst throw) (cf कलियुग) where the number of nuts when divided by four leave one as remainder The best throw was Krta (cf कृतयुग and Eng कृत) where there was no remainder

अनुव्रताम्—अनुकूल व्रत यस्या ँ ताम् (ब०)। 'अनुव्रतशब्दो भक्तपर्याय ।' acting according to (अनु) the will (व्रत) of another hence obedient devoted Cf अह रामानुव्रता Ram Its antonym is अपव्रता—acting

रेज is often used in connexion with heaven and earth They would translate He to whom the two battle arrays placed in position look up to for aid with mind filled with trepidation The correspond ng passage in AV contains रोदसी and it is difficult to understand why western scholars should object to the explanation of the word offered by Indian commentators

For the प्रयुक्त s cf नभ चार्वी इव क्रया x 166 3

अवसा—with his aid or for his aid

तस्तभाने—perf part Ātm of स्तभ् to prop, fixed fast अवतस्कभाने AV स्तभ and स्कभ are absolutely equivalent rime roots RV shows स्तभ् while AV prefers स्कभ *Variants* II § 137

रेजमाने—pres part Ātm of रेज 'to move to and fro to shake See p 159 कम्पमाने—Uvaṭa राजमाने—S , Mah

The simple meaning of *ab* is Heaven and earth look on him with gratitude, as he has made them fast and they think of their previous unstable state with a shudder (*Geldner*)

यत्र—in Prajapati—S in heaven and earth—Mah on the battle arrays—European scholars Note that यत्र is not analysed in the Pada text See under युक्ता x 125 4 p 374

उदितो विभाति—उदितो ब्येति TS यस्मिन्नधि विततः सूर एति MS यस्मै सूरो विततो भाति AV

7

| | |
|---|---|
| आपो ह यद्बृहतीर्विश्वमायन् | आपः। ह। यत्। बृहतीः। विश्वम्। आयन् |
| गर्भं दधाना जनयन्तीरग्निम्। | गर्भम्। दधानाः। जनयन्तीः। अग्निम्। |
| ततो देवानां समवर्ततासुरेकः | ततः। देवानाम्। सम्। अवर्तत। असुः। एकः |
| कस्मै देवाय हविषा विधेम ॥७॥ | कस्मै। देवाय। हविषा। विधेम ॥७॥ |

When (*yat*) the great waters (*brhatih apah*) pervaded the universe (*viśvam ayan*) containing an embryo (*garbham dadhanah*) and generating fire (*agnim janayantih*) thence (*tatah*)

arose (*sám avartata*) the one spirit (*ékaḥ ásuḥ*) of the gods (*devā́nām*). ...

बृहती: बृहत्यो महत्यः। जसि 'वा छन्दसि' [६।१।१०६] इति पूर्वसवर्णदीर्घः। '°बृहन्महतोरुपसंख्यानम्' [६।१।१७३।१] इति ङीप उदात्तत्वम्। अग्निम् उपलक्षणमेतत्। अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्ती: जनयन्त्यः। तदर्थं गर्भम् हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधाना: धारयन्त्यः आप: ह आप एव विश्वम् आयन् सर्वं जगद्व्याप्नुवन्। यत् यस्मात् तत: तस्माद्गर्भात्* देवानाम् देवादीनां सर्वेषां प्राणिनाम् असु: प्राणभूत एक: प्रजापतिः समवर्तत समजायत†। यद्वा, यत् यं गर्भं दधाना: आप: विश्वात्मनावस्थितास्ततो गर्भभूतात् प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत। अथवा यत्। लिङ्गवचनयोर्व्यत्ययः। उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः तत: ताभ्योऽद्भ्यः सकाशात् एक: अद्वितीयः असु: प्राणात्मकः प्रजापतिः समवर्तत निरक्राम। तस्मै कस्मै इत्यादि गतम् ॥७॥

उवटभाष्यम्। 'आपो ह वा इदमग्रे सलिलमेवास' [श° ब्रा° ११।१।६।१] इत्येतद्ब्राह्मणं निदानभूतमनयोः कण्डिकयोः। आप:। पुराकल्पद्योतको ह इति निपातः। यत् बृहती: महत्यः विश्वं सर्वम् आत्मत्वेन आयन् प्रापुः। गर्भं हिरण्यगर्भलक्षणं दधानाः। जनयन्ती: जनयिष्यन्त्यः। अग्निम् अग्निरूपं हिरण्यगर्भम्। हिरण्यगर्भवचनो वा अग्निशब्दः। ततः गर्भात् संवत्सरोषितात्। देवानां मध्ये समवर्तत समभवत् असुः प्राणात्मकः एकः देवानाम्। स हि लिङ्गशरीरो य इत्यम्भूतो हिरण्यगर्भः।

तैत्तिरीयभाष्यम्। यद् यस्य प्रजापतेरनुग्रहात् महती: महत्य आपः विश्वम् आयन् विश्वाकारं प्राप्ताः। अत एव स्मर्यते—

अप एव ससर्जादौ तासु वीर्यमवासृजत्
तदण्डमभवद्धैमम् [मनु° ११९]

---

* तद्गर्भात्:—Bom.

† यत्...समजायत—occurs in only one MS. of M.

इति। कीदृश्य आपः? दक्षम् अग्निचयने कुशलं यजमानं दधाना धारयन्त्यः उत्पादयन्त्यः। तथा चेतव्यमग्नि जनयन्तीरुत्पादयन्त्यः। ततस्तस्मात् प्रजापतेः देवानां सर्वेषाम् असु जीवनहेतुः प्राण एको निरवर्तत निष्पन्नः।

In the AV version this is the first stanza Here also it is connected with the beginning of the hymn, गर्भं in this stanza standing for हिरण्यगर्भं in st 1 "The waters here referred to are to be understood as the waters in the beginning of the creation, where, as we read (RV x 129 3) 'everything was like a sea without a light' or as the *Satapatha Brahmana* says, 'everything was water and sea' These waters held the germ (RV x 82 5 b), and produced the golden light the sun (RV x 72 7) whence arose the life of all the gods, *viz*, Prajapati"

बृहती—nom pl, class बृहत् Some construe बृहती आपो ह यत् विश्व गर्भं दधाना (carrying the All as the embryo), अग्नि जनयन्ती आयन्, तत etc

जनयन्ती—class जनयन्त् *Cf* जनन्ती iii 61 4 *The root* जन् is transitive in the Vedas and means to generate

अग्निम्—Agni is mentioned here as being the *first* of the gods and their chief representative In i 70 3 (गर्भो यो अपाम्), iii 1 13 (अपां गर्भम्), etc, Agni is described as the embryo of the waters Agni is the central figure in all sacrifices Hence Agni means sacrifice by लक्षणा

तत—from the waters, *cf* x 125 7 ततो वि तिष्ठे भुवनानु विश्वा

आयन्—3 pl imperfect of इ *to go*' आपो अग्रे विश्वमावन् AV "Instances like this tend to confirm the use of अव as a verb of motion' *Variants*, II 253

असु—*life breath* Av *ahu* In Av *ahûm mərəncô*[*] means life destroying In x 168 4 असु is praised as आत्मा देवानाम् the life breath of the gods From AV downwards the word came

---

* It is interesting to note that this मिरेची became मोचराण in Beng and मचडु in Gujrati by metathesis, though the regular form मरचाण is preserved in Hindi

to be used in the pl. in the sense of the प्राणवायु even as प्राण is used in the plural in the sense of पञ्चवृत्ति प्राण (see ब्रह्मसूत्र ii. 4. 12) in later literature.

## 8

| | |
|---|---|
| यश्चिदापो महिना पर्यपश्य- | यः । चित् । आपः । महिना । परिऽअपश्यत् । |
| द्दक्षं दधाना जनयन्तीर्यज्ञम् । | दक्षम् । दधानाः । जनयन्तीः । यज्ञम् । |
| यो देवेष्वधि देव एक आसीत् | यः । देवेषु । अधि । देवः । एकः । आसीत् । |
| कस्मै देवाय हविषा विधेम ॥८॥ | कस्मै । देवाय । हविषा । विधेम ॥८॥ |

Even he who (*yah cit*) by his greatness (*mahinā'*) beheld the waters (*ā'pah paryapaśyat*) which bestowed power (*dákṣam dádhānāh*) and generated the sacrifice (*yajñám janáyantīh*), he who(*yáh*) was (*ā'sīt*) the one god (*ékah deváh*) above the gods (*devéṣu adhi*) .

यज्ञम् यज्ञोपलक्षितं विकारजातं[1] जनयन्तीः उत्पादयन्तीस्तदर्थं दक्षम् प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयित्रीः। दधातेर्हेतौ शानच्। 'अभ्यस्तानामादिः' [६।१।१८९] इत्याद्युदात्तत्वम्। ईदृशीः आपः। व्यत्ययेन प्रथमा। अपः प्रलयकालीनाः। महिना महिम्ना। छान्दसो मलोपः। स्वमाहात्म्येन यः च[2] प्रजापतिः पर्यपश्यत् परितो दृष्टवान्। यः च देवेषु अधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीय आसीत् भवति। अस्तेश्छान्दसो लङ्। 'अस्तिसिचोऽपृक्ते' [७।३।९६] इतीडागमः। तस्मै कस्मा इत्यादि गतम् ॥८॥

---

1 यज्ञ' इतियज्ञम् Uvaṭa. यज्ञशब्देन यज्ञकर्मा प्रजा उच्यते। Mah...
2 S. apparently paraphrases चित् by च.

The first half of this stanza is practically the same as that of the previous stanza दचम् stands for गर्भम् and यज्ञम् for अग्निम् TA 1 13 8 reads स्वयंभुम् for अग्निम्

महिना—In the older language are found several instrumental singulars of *man* stems in which *mna* becomes *ma* (*e g*, *draghma* x 79 4) or *na* (*e g*, *mahina*, *varnā* and *prathina* with extent, *bhuna* with greatness and *prena* with love) महिना[1] is due either to the dissimilatory elision of the *m* after the initial *m* (Wackernagel, A G III, 268 9) or is a blend of *mahna* and *mahimnā* for metrical and stylistic conveniences (Bloomfield, JAOS XVI clvii) 'The AV whose diction is less hieratic and in closer contact with popular speech, whose metres are far less trammelled, reads at iv 30 8 (var of RV x 125 8) *eta'vati mahimna' sam babhuva*" The only occurrence of the metrically bad *mahimnā* after the caesura is in वैश्वानर महिना विश्वकृष्टि RV 1 50 7[2]

---

[1] वरिणा, प्रथिना, *etc*, *expressing as they do similar ideas are* obviously formed after the analogy of महिना

[2] 'महिना occurs 35 times in RV All the occurrences are restricted to two metrical types First in octosyllabic padas the word occupies the fourth, fifth and sixth syllables Secondly the word follows immediately upon the caesura of a tristubh jagati pāda, no matter whether the caesura is after the fourth or fifth syllable Both positions are metrically speaking, *critical* *The second half of octosyllabic pādas, is regularly* iambic the caesura in tristubh jagati padas is regularly followed by an anapaest (⏑ ⏑ —) It is evident at once that the regular instrumental *mahimna'*, a bacchius (⏑ — —), could not, without violating the two general metrical laws, stand in these positions, and yet the facts show that there was a marked lexical and stylistic need *for* such a word in that very position" JAOS XVI clvi

दक्ष—(from दक्ष् to be able) means will, power. दक्ष बल क्रतु प्रज्ञानम —Bhāratasvāmin under SV. v 4. 4. See p 158. As Prajāpati is the embodiment of all power, दक्ष refers to Prajāpati here *Cf.* दक्षं दधासि जीवसे 1. 91. 7

TS reads दक्ष दधाना जनयन्तीरग्निम् in both stanzas. S. explains दक्षम् अग्निचयने कुशलं यजमानं दधाना धारयन्त्य उत्पादयन्त्य.। तथा चेतव्यम् अग्निं जनयन्तीः उत्पादयन्त्यः।

दधानाः—pr. part of धा. The perf. part. is accented on the final syl.

यो देवेष्वधि देव एक आसीत्—who was the one god above the gods. AV reads यास्तु देवीष्वधि देव आसीत्—over whom, divine ones, god was.

एक —is absent in AV and MS It is unnecessary and offends the metre and should therefore be dropped

9

| | |
|---|---|
| मा नो हिंसीज्जनिता यः पृथिव्या | मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । |
| यो वा दिवं सत्यधर्मा जजान । | यः । वा । दिवम् । सत्यऽधर्मा । जजान । |
| यश्चापश्चन्द्रा बृहतीर्जजान | यः । च । अपः । चन्द्राः । बृहतीः । जजान । |
| कस्मै देवाय हविषा विधेम ॥९॥ | कस्मै । देवाय । हविषा । विधेम ॥९॥ |

May he not injure us (*mā́ naḥ hiṁsīt*) who (*yaḥ*) is the generator (*janitā́*) of the earth (*pṛthivyā́ḥ*), or who (*yaḥ vā*) with true ordinances (*satyadharmā*) generated the heaven (*divam jajā́na*) and who (*yáḥ ca*) generated (*jajā́na*) the great (*bṛhatī́ḥ*) and brilliant (*candrā́ḥ*) waters (*apáḥ*)...

स प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा। 'जनिता मन्त्रे' [६।४।५३] इति णिलोपो

निपात्यते। 'उदात्तयणो हल्पूर्वात्' [६।१।१७४] इति पृथिवीशब्दाद्विभक्तेरुदात्तत्वम्। यः वा यश्च **सत्यधर्मा**। सत्यमवितथं धर्मं जगतो धारणं यस्य स तादृशः प्रजापतिः दिवम् अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास। जनी प्रादुर्भावे [धा° ४।४१]। णिचि वृद्धौ 'जनीजॄष्क्नसुरञ्जः°' [ग° सू° ६।४।९२] इति मित्त्वात् 'मितां ह्रस्वः' [६।४।९२] इति ह्रस्वत्वम्। ततो लिटि "अमन्त्रे°" [३।१।३५] इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' [६।१।१९३] इति प्रत्ययात् पूर्वस्योदात्तत्वम्। यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अपः उदकानि जजान जनयामास। 'ऊडिदम्°' [६।१।१७१] इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्। तस्मै कस्मा इत्यादि गतम् ॥९॥

[यश्चापश्चन्द्राः प्रथमो जजान। यश्च चन्द्राः आह्लादिका जगत्कारणभूता आपो जलानि प्रथम आदिभूतः सन् जजान उत्पादितवान्। तद्द्वारा मनुष्यान् इत्यर्थः। यतः श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः। मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः। 'मनुष्या वा आपश्चन्द्राः' [तै° सं° ७।३।१।२०] इति श्रुतेः। Mah.

सत्यधर्मा अवितथधारणशक्तिः। बृहतीः बहुलाः। TSS ]

हिंसीत्—3. sing. injunctive of हिन्स् 'to injure.'

मा नो हिंसीत्—*Cf*. i. 114 7-8 · मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ "O Rudra, harm not cither great or small of us, harm not the growing boy, harm not the full-grown man. Slay not a sire among us, slay no mother here, and to our own dear bodies, Rudra, do no harm. Harm us not Rudra, in our seed and progeny, harm us not in the living, nor in cows *or steeds. Slay not our heroes in the lury ol thy wrath. Bringing* oblations evermore we call to thee."

VS xii. 102 reads मा मा हिंसीत् for मा नः हिंसीत् (the pl. नः is better, since हिम is pl.), व्यानट् for जजान and प्रथमो for बृहतीः. On व्यानट्

Uvata remarks व्यानडिति व्याप्तिकर्मा, सुत्या तु दृजतेरर्थे व्याख्यात Mahidhara explains आप as जगत्कारणभूता

सत्यधर्मा—धर्म as an *a* stem is unknown to RV It is a neuter *an* stem (*cf* तानि धर्माणि प्रथमान्यासन् x 90 16) meaning ordinance law from धृ to hold to uphold (lit that which holds its own which persists or endures or that which upholds the universe) Vedic धर्मन् *n* became post Vedic धर्म *m* but the original form persisted at the end of Bahuvrihi compounds hence Panini had to frame the rule धर्मादनिच् केवलात् v 4 124 धर्म is read in the अर्धर्चादि list and commentators hold 'धर्मोऽदृष्टार्थवाची तत्साधनवाची तु नपुंसकलिङ्ग । तानि धर्माणि प्रथमान्यासन् ।

जजान—In the Vedas the root जन is transitive with Parasmaipadin endings and intransitive with Atmanepadin endings

चन्द्रा—The word was originally श्चन्द्र and meant shining The original form is preserved in हरिश्चन्द्र and in Ved सुश्चन्द्र, विश्वश्चन्द्र etc Skt *candra* Gk *kindaros* glowing coal Lat *candēre* to shine to glow Skt *candana* (lit the glowing tree) and Eng *candid* (lit glowing white) are derived from this root The word चन्द्रमास is really a कर्मधारय compound of चन्द्र bright and मास moon For चन्द्रा आप *cf* TS vi 4 2 4 यद्वै दिवा भवति अपो रात्रि प्रविशति तस्मात् ताम्रा आपो दिवा ददृश्रे यद्वै नक्तं भवति अपोऽह प्रविशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे। (यदा दिवस भवति तदा रात्रिरप प्रविशति तस्माद्दिवा आप ईषद्रक्ता दृश्यन्ते रक्तवर्णप्रभवत्वात् तामस्य। नक्तम् अह प्रवेशात् चन्द्रा शुक्ला आपो दृश्यन्ते।)

**10**

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥१०॥

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥१०॥

O Prajāpati (*Prajāpate*), none other than thou (*na tvád anyah*) has encompassed (*paribabhūva*) all these created things (*tá viśva jātā́ni*), let that be ours (*tat nah astu*) desiring which (*yatkāmah*) we sacrifice to thee (*te juhumah*), may we be (*vayam syama*) masters (*patayah*) of riches (*rayīnā́m*).

इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः 'प्रजापते' इत्येषानुवाक्या[1]। सूत्रितञ्च—'प्राजापत्य इळादधः' 'प्रजापते न त्वदेतान्यन्यः' [आ° श्रौ° २।१४।११-१२] इति। केशनखकीटादिभिर्दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत्[2]। सूत्रितञ्च—'अपोऽभ्यवहरेयुः'[3] 'प्रजापते न त्वदेतान्यन्य.' [आ° श्रौ° ३।१०।२२-२३] इति। चौलादिकर्मस्वप्येषा होमार्था[4]। सूत्रितञ्च—'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' [आ° गृ° १।४।४] इति ॥

हे प्रजापते, त्वत् त्वत्तोऽन्य· कश्चित् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि। 'शेश्छन्दसि बहुलम्' [६।१।७०] इति शेर्लोपः। जातानि प्रथमविकारभाञ्जि[5] ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति न व्याप्नोति[6]। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भाव·। परिपूर्वो भवति·

---

[1] इळादधो नामेष्ट्ययनम्, तत् प्रजापतिदेवताकम्, पर्वणि पर्वणि कर्तव्यम्। तत्र प्रजापत इत्यृगनुवाक्या। इष्टिभिरयनं गमनं येषु तानीष्ट्ययनानि चातुर्मास्यादीनि।

[2] तथा चाश्वलायनसूत्रे—'व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः। भिन्नभिन्नानि च' [३।१०।२० २१] इति।

[3] "दुष्टानि हवींष्यप्सु प्रक्षिपेदित्यर्थः।"

[4] चौलादिकर्मसु चतस्र आज्याहुतयो होतव्याः। तत्र प्रजापते न इत्यृचा चतुर्थीम् आहुतिं जुहुयात्।

[5] Referring to the six भावविकारs—जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति mentioned by Yaska (Nir 1 2)

[6] परिपूर्वो भवति परिग्रहे परित्यागे वा वर्तते। परिगृह्णाति परिग्रहीतुं शक्नोति परिच्छेत्तुं वेत्यर्थः। त्वमेव परिगृह्णासि रक्षसि वा। यत ईदृशोऽसि अतो ब्रूम। Sh M यत एवं त्वां वयं सर्वस्य विभुं पश्याम अतस्त्वेशानम् अतो ब्रूम स कामोऽस्माकं त्वदनुध्यानात् समृध्यताम् Durga परिभव सृष्टेरप्युपलक्षणम्। सृष्टिसंहारयोरसमर्थ इत्यर्थः। TSS परिपूर्वो भवतिर्व्याप्त्यर्थे वर्तते SBS

परिग्रहार्थं । वय च यत्कामा यत् फल कामयमाना ते तुभ्य जुहुम हवींषि प्रयच्छाम तत् फल न अस्माकम अस्तु भवतु । तथा वय च रयीणाम् धनाना पतय ईश्वरा स्याम भवेम । [रयीणाम् ।] 'नामन्यतरस्याम्' [६।१।१७७] इति नाम उदात्तत्वम् ॥१०॥

This is one of the six[1] stanzas in RV in which the Pada text does not differ from the Samhita text So it must either have been added after the constitution of the Pada text or the Padakara may have taken no notice of it because of its apocryphal character It must moreover be admitted that it is something in the nature of an anticlimax after the eloquent stanzas that have preceded it Still it is an oft quoted mantra occurring in VS x 20 xxiii 65 AV vii 80 3 TS i 8 14 2 iii 2 5 6 MS ii 6 12 KS xv 8 TB ii 8 1 2 Nir x 43 SB v 4 2 9 xiii 5 2 23 xiv 9 3 3 etc etc AV and VS read रूपाणि (रूप्यमाणानि भूतजातानि) for जातानि AV also reads परिभूरजान for परि ता बभूव

The Padapatha if constructed would run as follows —

प्रजाऽपते | न | त्वत् | एतानि | अन्य |

विश्वा | जातानि | परि | ता | बभूव ।

यत्ऽकामा | ते | जुहुम | तत् | न | अस्तु |

वयम् | स्याम | पतय | रयीणाम् ॥

परि ता—Gunavisnu in his *Chandogyamantrabhasya* reads परिता as one word and explains it as पालयिता G s failure to take into account the accents of words sometimes leads him into curious errors

यत्कामास्—Cf यत्काम इदं जुहोमि तन्मे समृध्यताम् TB iii 11 2 4

[1] The other five stanzas are vii 57 12 x 20 1 x 101

एतानि—MS reads एता (न हि त्वदन्य एता) which though older in form is due to "a conscious archaizing in a secondary text." *Variants*, III § 165

वय स्याम पतयो रयीणाम्—RV iv 50 6, v 55 10, viii 40 12, viii 48 13

---

## *DEVI SUKTA*

### *Introductory Note*

The goddess Vak (Speech) is represented as praising herself in this hymn which became one of the most famous hymns in later times The other hymn addressed to Speech is x 71 some of the stanzas of which have become almost proverbial It is probably this hymn that gave rise to the idea of *Sabda-brahman*

"From the conception of the power of prayer and spells in the Veda it is clear how Speech could be looked upon as accompanying and supporting all the gods, and reaching wherever the magic power of the *brahma* extended The idea bears a resemblance to the Word of God as personified in the *Wisdom of Solomon*, xviii 15 ff , and to the Logos of Philo but it did not lead to the same development in cosmogonic doctrine* "

In the *Sarvanukramani* Vāk is said to be the daughter of the great sage *Ambhrna* of whom hardly anything is known 'In the voice of the thunder", says Darmesteter, ' the Greeks recognised the warning of a god which the wise understand, and they worshipped it as *Ossa Dios aggelos* the Word Messenger of Zeus ,' the Romans worshipped it as a goddess Fama , Indra adores it as 'the Voice in the cloud,' Vak Ambhrni which issues from the waters, from the forehead of the father, and

---

* THOMAS, *Hymns from the Rigveda*, p 88

hurls the deadly arrow against the foe of Brahman So the word from above is either a weapon that kills, or a revelation that teaches "* What is said of Vag Ambhrni is not exactly correct

This hymn thus antedates the Greek doctrine of Logos by some centuries 'Vak appears in RV as an active female divine power showing grace to mortals In the Brahmanic period Vāk becomes more and more like the Greek Logos, and it may truthfully be said that in this period "the Word was God" 'In Greece," says Hopkins "the conception of Logos begins with Heraclitus, passes on to the Stoics, is adopted by Philo, becomes a prominent feature of Neo Platonism, and reappears in the Gospel of St John It is certainly legitimate to suppose that Heraclitus might have received the idea indirectly if not directly from contemporary Eastern Philosophers'

In early Babylonian religion also 'the Word was exalted by higher religion to a great cosmic divine agency sometimes personified'

This is probably the best known hymn of RV in Bengal and has its ritual application in the Durgāpuja as well as in the recitation of the Candi or Saptasati Hymns in which the first person is used are known as *adhyatmika*† Such hymns are rare This is an आध्यात्मिक hymn The other well known आध्यात्मिक hymns are x 48-49 and x 119 in all of which Indra is the speaker In the case of आध्यात्मिक hymns the seer is the same as the deity ("उत्तमस्य तु वर्गस्य य ऋषि सैव देवता। )

* SBE, Vol iv, p lxxviii

† तास्त्रिविधा ऋच—परोक्षकृता प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृता सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपुरुषैश्चाख्यातस्य। इन्द्रो दिव इन्द्र ईशे पृथिव्या [१०।८९।१०]। अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना। त्वमिन्द्र बलादधि [१०।१५३।२], वि न इन्द्र मृधो जहि [१०।१५२।४] इति। अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना। यथैतदिन्द्रो वैकुण्ठ [१०।४८ ४९] लवसूक्त [१०।११९] वागाम्भृणीयम् [१०।१२५] इति। परोक्षकृता प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा, अल्पश आध्यात्मिका।

## Hymn No. 11

### DEVĪ SŪKTA

x 125

म० १०  सू० १२५

आम्भृणी वाक् ऋषि । परमात्मा देवता । १, ३-८—त्रिष्टुप्, २—जगती ।

1

| | |
|---|---|
| अहं रुद्रेभिर्वसुभिश्चरा- | अहम् । रुद्रेभिः । वसुऽभिः । चरामि । |
| म्यहमादित्यैरुत विश्वदेवैः । | अहम् । आदित्यैः । उत । विश्वऽदेवैः । |
| अहं मित्रावरुणोभा बिभ- | अहम् । मित्रावरुणा । उभा बिभर्मि । |
| र्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१॥ | अहम् । इन्द्राग्नी इति । अहम् अश्विना । उभा ॥१॥ |

I (*aham*) go about (*carāmi*) with the Rudras (*Rudrébhih*), with the Vasus (*Vasubhih*), I (*aham*) with the Ādityas (*Ādityaih*) and (*uta*) with the All gods (*viśva devaih*), I (*aham*) bear (*bibharmi*) both (*ubhá*) Mitra and Varuna (*Mitrā́-Varuṇa*), I (*aham*) Indra and Agni (*Indrāgní*), I (*aham*) both (*ubhá*) Aśvins (*Aśvinā*)

अहमित्यष्टर्चं त्रयोदशं सूक्तम् । अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति । द्वितीया जगती, शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—'अहमष्टौ वागाम्भृणी* तुष्टावात्मानं द्वितीया जगती' इति । गतो विनियोगः ।

---

* Ṣadguruśiṣya evidently reads वाङ्नाम्भृणी for he explains वाङ्नामाम्भृणी । अम्भृणस्य महर्षेः पुत्री । आत्मानं तुष्टाव । स्वयमेवाधिका देवता चैषर्षे ।

अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद् ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः रुद्रैरेकादशभिः। इत्थम्भावे तृतीया। तदात्मना चरामि। एवं वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम्। तथा मित्रावरुणा मित्रं वरुणञ्च। 'सुपां सुलुक्°' [७।१।३९] इति द्वितीयाया आकारः। उभा उभौ अहम् एव ब्रह्मीभूता* बिभर्मि धारयामि। इन्द्राग्नी अपि अहम् एव धारयामि। उभा उभौ अश्विना अश्विनौ अपि अहम् एव धारयामि। मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद् दृश्यते। माया च जगदाकारेण विवर्तते। तादृश्या मायाया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य† सर्वस्योपपत्तिः॥१॥

अथर्ववेदभाष्यम्। 'अहं रुद्रेभिः' इति सूक्तेन जातकर्मणि शङ्खपुष्पिका-गन्धपुष्पिके पिष्ट्वा, अभिमन्त्र्य, हिरण्यशकलेन प्राशयेत्। तथा तत्रैव कर्मण्यनेन सूक्तेन शङ्खनाभिं पिप्पलीं च पिष्ट्वा, अभिमन्त्र्य हिरण्यशकलेन प्राशयेत्। तथा मेधाजननार्थं प्रथमं वाग्व्यवहारं कुर्वतः शिशोर्मातुरुत्सङ्गे विहितस्य अनेन सूक्तेनाज्यं हुत्वा तालुनि सम्पातानानयेत्। तथा दधिमधुनी एकत्र कृत्वा अनेन सम्पात्याभिमन्त्र्य शिशुं प्राशयेत्। तथोपनयनकर्मणि दण्डप्रदानानन्तरम् एतत् सूक्तं माणवकं वाचयेत्। तथायुष्कामोऽपि शङ्खपुष्पगन्धपुष्पप्राशनादीन्युक्तानि पञ्च कर्माणि कुर्यात्। तथा च कौशिकं सूत्रम्। अहं रुद्रेभिरिति शुक्लपुष्पे हरितपुष्पे बिंस्यनाभिपिप्पल्यौ जातरूपशकलेन प्राक् स्तनग्रहात् प्राशयति। प्रथमप्रवदस्य मातुरुपस्थे तालुनि सम्पातान् आनयति। दधिमध्वाशयति। उपनीतं वाचयति। वार्षशतिकं कर्म" [कौ° २।१] इति। तथोपनयनेऽनेन

* M Bombay and Peterson. Some needlessly change ब्रह्मीभूता into ब्रह्मभूता ब्रह्मीभूता occurs in Śaṅkara Bhāṣya on B. S. 1 3 15

† The Gen. in ब्रह्मणः shows that the reading उत्पत्ति found in all printed works is incorrect AVS shows the correct reading

सूक्तेनाज्यहोमं कुर्यात्। सुमितं हुत्वपनयनं प्रक्रम्य "मेधाजननायुष्यैर्जुहुयात्" [कौ° ७।८] इति॥ तथाध्यायोत्सर्जनकर्मण्यनेन सूक्तेनाज्यं हुत्वा रसेषु सम्पातानानयेत्। तथा च कौशिकः [१४।३] 'उत्सर्जनम्' प्रक्रम्य "विश्वे देवाः" [१।३०] "अहं रुद्रेभिः" [४।३०] "सिंहे व्याघ्रे" [६।३८] "यशो हविः" [६।३९] इत्यादि॥

सर्वजगत्कल्पनास्पदं सच्चिद्सुखात्मकं परं ब्रह्म स्वात्मत्वेन विदुषी अम्भृणाख्यस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मवादिनी स्वात्मानं सर्वात्मभावेन तुष्टाव। तदुक्तं दाशतय्यनुक्रमणिकायाम्– "अहमष्टौ वागाम्भृणी तुष्टावात्मानम्" [सर्वानुक्रमणी] इति। विशुद्धसत्त्वपरिणामरूपस्यान्तःकरणस्य वृत्तिविशेषोऽभिमानात्मकोऽहङ्कारः। तदुपलक्षितानवच्छिन्नात्मिका अहं रुद्रेभिः रुद्रैः एकादशभिः अष्टभिः वसुभिः। इत्थम्भावे तृतीया। तत्तद्देवात्मना चरामि। एवम् अहम् आदित्यैः इत्यादावपि योज्यम्। आदित्या द्वादशसंख्याका धात्रादयः। वसुरुद्रादित्यव्यतिरिक्ता गणशो वर्तमानाः विश्वदेवाख्याः। एकस्यैव हि ब्रह्मणस्तत्तदुपाध्यवच्छेदेन वस्वादिदेवतारूपेण भेदावभासात्। वस्तुतस्त्वैक्यमेवेति तदनुसन्धाना ब्रह्मवादिन्येवं ब्रूते। तथा मित्रावरुणा। 'सुपां सुलुक्°' [७।१।३९] इति द्वितीयाया आकारः। मित्रावरुणौ देवौ उभा उभौ अहम् एव परब्रह्मात्मिका बिभर्मि धारयामि। इन्द्राग्नी अपि अहम् एव धारयामि। उभा उभौ अश्विना अश्विनौ अपि अहम् एव धारयामि। मत्स्वरूपे अद्वितीये ब्रह्मणि सर्वं जगत्, शुक्तौ रजतमिव, अध्यस्तं सद् दृश्यते। माया च जगदाकारेण विवर्तते। तदाधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योपपत्तिः॥१॥

दुर्गभाष्यम्। वागाम्भृणीये वागेव ब्रवीति। अहम् एव रुद्रैः वसुभिः आदित्यैः विश्वदेवैः विश्वैश्च देवैः सहभूता चरामि स्तुतिरूपेण। अहम् एव मित्रावरुणा मित्रावरुणौ उभा उभावपि इन्द्राग्नी अश्विना अश्विनौ च उभा उभावपि बिभर्मि हविषा, मत्पूर्वकं हविःसम्प्रदानं सर्वदेवताभ्य इत्यभिप्रायः।

महेश्वरभाष्यम्। वागाम्भृणीयं सूक्तम्। वाग् वैदिकीयम्। आम्भृणस्य महतः फलस्य हेतुभूतेति तत्सम्बन्धिन्याम्भृणी च। सा वाग् आम्भृणीति विशेषण-समासः। वागाम्भृणी आत्मनो महिमानमाचष्टे। असत्यां सम्बन्धिभूतायां मयि* रुद्रादयश्चरन्तः कथं भवेयुः†, मूकास्तिष्ठेयुरित्येवमर्थं स्तुतिभूता वा तेषाम्। अहं रुद्रेभिः रुद्रैः वसुभिः च सह चरामि। अहम् आदित्यैः उत विश्व-देवैः अपि सर्वैर्देवैः। अहम् एव मित्रावरुणौ हविःसम्प्रदानं कुर्वती‡ उभा उभावपि बिभर्मि पुष्णामि। अहम् एव इन्द्राग्नी। अहम् एव अश्विना अश्विनौ उभा उभौ। सर्वत्राकारो द्विवचनस्य स्थाने।

दीपिका। "इह शिष्टानुशिष्टानां शिष्टानामपि सर्वदा। वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥" इत्यादिवचनशतैः कविभिर्वाचां लोकयात्रामूलकत्वं प्रति-पादितम्। सा च निखिलव्यवहारनिदानं वाक् स्वमहिमानं प्रकटयति—अहमित्या-दिभिरष्टाभिरृग्भिः। यद्यपि "आत्मप्रशंसां परगर्हामिव वर्जयेत्" [आप° ध° सू° १।७।२४] इति जागर्त्यनुशासनं तथापि भक्तजनानुकम्पया भूतार्थकथनं कथमप्यात्म-प्रशंसाकोटौ विनिवेशयितुं न शक्यते, न वा दोषलेशेन स्पृश्यते। ये तावद् गण-देवता रुद्राश्च वसवश्च आदित्याश्च विश्वदेवाश्च सर्वे ते ममैवानुचराः। ये च प्रायेण युग्मश आहूयन्ते मित्रावरुणौ च इन्द्राग्नी च अश्विनौ च तेऽपि मयैव विधार्यन्ते। "स्तूयमाना हि देवता वीर्येण विवर्धते" "यस्य ब्रह्म वर्धनं यस्य सोमः" [ऋ° सं° २।१२।१४] इत्याद्युक्तेर्देवानां वर्धमानपुष्टिः स्तुत्याहुत्यधीना, स्तुतिराहुतिश्च मन्त्राधीना, मन्त्राश्च वागात्मकाः, अतः सर्वेषां देवानां वागधीनत्वमुपपद्यते। "यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी॥" [श्वेताश्व° ४।५] इति श्रुति-रप्यक्षरशब्देन मामेव लक्षीकरोति। श्रुत्यन्तरमपि श्रूयताम्—"वागक्षरं प्रथमजा ऋतस्य। वेदानां मातामृतस्य नाभिः। सा नो जुषाणोपयज्ञमागात्। अवन्ती देवी सुहवा मे अस्तु॥" [तै° ब्रा° २।८।८।५] इति॥१॥

रुद्रेभिः—The Maruts are known as Rudras from the name of their father: मरुतां तु गणस्यैतन्नाम रुद्रा इति स्मृतम् *Bṛhaddevatā* v, 48. In

* यामपि—मुद्रितपाठः। † भवेरन्—मु° पा°। ‡ कुर्वन्तौ—मु° पा°

the *Brāhmaṇas they become a separate class and their number* is eleven त्रयस्त्रिंशद्वै देवाः सोमपाः । अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च । A B ii 4 For the ending see p 22

वसुभिः—In RV the Vasus are vague in number and character They are specially connected with Indra though in later Vedic *texts they are specially connected with Agni* In *AB* , *SB* and later literature they are eight in number Of the four instrumentals only वसुभिः is analysed in the Pada-text In the case of रुद्रेभिः since भिस comes after a long vowel no अवग्रह is used आदित्य and विश्वदेव are regarded as भ acc. to यचि भम् and not as पद, so the *question of* अवग्रह *does not arise*

आदित्यैः—The Ādityas are the sons of Aditi They are seven or eight in number in RV and much more definite than other groups Varuṇa is the chief of the Ādityas In RV ii 27 1 six are enumerated Mitra, Aryaman, Bhaga, Varuṇa, Dakṣa and Amśa In the Brāhmaṇas *their number* rose to 12 TB (i 1 9 1) mentions मित्र, वरुण, अर्यमन्, अंश, भग, धातृ, इन्द्र and विवस्वत् as the sons of Aditi *Cf* x 48 11 आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम

आदित्या द्युस्थाना द्वादश । तथा वसवश्चाष्टौ पृथिवीस्थाना । तथा रुद्रा अन्तरिक्षस्थाना एकादश । Haradatta See also BU iii 9 2 5

विश्वदेवैः—' A comprehensive group is formed of the Viśve devāḥ or All Gods, who occupy an important position in the sacrifices *It is a fictitious sacrificial group meant to represent all the gods* in order that none should be excluded in laudations intended to be addressed to all But the All-gods are sometimes conceived as a narrower group, being invoked with other groups, such as the Vasus and Ādityas ' MACDONELL, *Vedic Mythology* p 130

The names of the Vasus Rudras and Ādityas as they appeared in later times are thus given in the *Mahābhārata*

धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवश्चाष्टतस्थिरे ॥
मृगव्याधश्च शर्वश्च निऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तप ॥

भवनोऽथेश्वरश्चैव कापाली च विशाम्पते ।
स्थाणुर्भगश्च भगवान् रुद्रास्तवावतस्थिरे ॥
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ।
महिमानं पाण्डवस्य कुर्वन्तस्तस्थुरम्बरे ॥

Ṣadguruśiṣya on AB. ii. 4.

मित्रावरुणा and अश्विना—the duals are irregular, as आ regularly occurs before consonants and at the end of a pāda in the older part of RV. See under x. 14. 11, p. 278.

बिभर्मि—like a mother; cf. मातेव यद् भरसे पप्रथानः v. 15. 4.

अश्विना—The two Aśvins are the surgeons of the gods and benefactors of gods and men. अश्विनौ—यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः । अश्वैरश्विनावित्यौर्णवाभः । तत् कावश्विनौ ? द्यावापृथिव्यावित्येके । अहोरात्रावित्येके । सूर्याचन्द्रमसावित्येके । राजानौ पुण्यकृतावित्यैतिहासिकाः । Nir. xii. 1.

## 2

| | |
|---|---|
| अहं सोममाहनसं बिभ- | अहम् । सोमम् । आहनसम् । बिभर्मि । |
| र्म्यहं त्वष्टारमुत पूषणं भगम् । | अहम् । त्वष्टारम् । उत । पूषणम् । भगम् । |
| अहं दधामि द्रविणं हविष्मते | अहम् । दधामि । द्रविणम् । हविष्मते । |
| सुप्राव्ये यजमानाय सुन्वते ॥२॥ | सुप्रऽअव्ये । यजमानाय । सुन्वते ॥२॥ |

I (ahám) bear (bibharmi) the exciting (āhanásam) Soma (sómam). I (ahám) Tvaṣṭṛ (Tváṣṭāram), also (utá) Pūṣan (Pūṣáṇam) and Bhaga (Bhágam). I (ahám) bestow (dadhāmi) wealth (dráviṇam) on the sacrificer (yájamānāya) that offers oblation (havíṣmate) and that presses Soma (sunvaté), deserving of careful protection (suprāvyè)

आहनसम् आहन्तव्यमभिषोतव्यं सोमम्। यद्वा, शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् अहम् एव बिभर्मि। तथा त्वष्टारम् उत अपि च पूषणम् भगम् च अहम् एव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे* तर्पयित्रे। अवतेस्तर्पणार्थात् 'अवितृस्तृतन्त्रिभ्य ईः' [उ° ३।१५८] इतीकारप्रत्ययः। चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [८।२।४] इति सुपः स्वरितत्वम्। सुन्वते सोमाभिषवं कुर्वते। 'शतुरनुमः°' [६।१।१७३] इति चतुर्थ्या उदात्तत्वम्। ईदृशाय यजमानाय द्रविणम् धनं यागफलरूपमहमेव [दधामि] धारयामि। एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' [ब्र° सू° ३।२।३८] इत्यधिकरणे भगवता भाष्यकारेण[1] समर्थितम्॥२॥

अथर्ववेदभाष्यम्। आहनसम् आहन्तव्यम्' अभिषोतव्यं सोमम्, यद्वा शत्रूणाम् आहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् अहम् एव बिभर्मि धारयामि पोषयामि वा। तथा त्वष्टारम् उत अपि च पूषणम् भगम् च एतत्संज्ञान् देवान् अहमेव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनहविर्भिर्देवानां प्राविते तर्पयित्रे। अवतेस्तर्पणार्थात् 'अवितृस्तृतन्त्रिभ्यः'

---

* AVS shows the correct reading शोभनहविर्भिर्देवानां प्राविते

Cf त्रियमानाख्य for विमानाख्यम् on p 270.

[1] "'फलम्' 'अतः' ईश्वराद् भवितुम् अर्हति। कुतः? 'उपपत्तेः'। स हि सर्वाध्यक्षः सृष्टि-स्थिति-संहारान् विचित्रान् विदधद् देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं सम्पादयतीत्युपपद्यते।.. धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। स्मर्यते चायमर्थो भगवद्गीतासु [७।२१ २२]—

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्॥'

इति। सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत् स्वकर्मानुरूपाः प्रजाः सृजतीति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते।" शारीरकभाष्यम्।

[उ°, ३।१५८] इति ईकारप्रत्ययः। चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [८।२।४] इत्यनुदात्तस्य सुपः स्वरितत्वम्। सुन्वते सोमाभिषवं कुर्वते। 'शतुरनुमः' [६।१।१७३] इति विभक्तेरुदात्तत्वम्। ईदृशाय यजमानाय द्रविणम् धनं यागफलरूपम् अहम् एव दधामि प्रयच्छामि, फलमत उपपत्तेः [ब्र° सू° ३।२।३८] इति न्यायेन परब्रह्मणः फलदातृत्वस्य निर्णीतत्वात् ॥२॥

दीपिका। न केवलं गणदेवता युग्मदेवताश्च मदधीनाः, स्वतन्त्रा अपि देवाः सर्वथा मम प्राधान्यमनुरुध्यन्ते। यागविशेषेषु नान्तरीयकतया वर्तमानं समुद्दीपकं सोमं तथा जगद्विधातारं त्वष्टारं पुष्टेः प्रापकं पूषणं सौभाग्यदैवतं च भगम्, अन्यांश्च तांस्तान् देवान् उक्तन्यायेनाहमेव धारयामि। यश्च यजमानो यथाविधि सोमाभिषवं विधाय मामुद्दिश्य हविः समर्पयति[1], स सर्वथा मदीयं रक्षणमर्हति, अहञ्च तस्मै धनसम्पदं प्रसादीकरोमि। यो यावद्ददाति हविरल्पं वा बहु वा, अहमेव तस्मै तावदेव गवाश्ववसुहिरण्यरूपं धनं ददामि, 'यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति' इति न्यायात्। (न केवलं सोमयागेषु वागात्मका मन्त्रा अपेक्ष्यन्ते, वाचैव स्त्रीभूतया स्त्रीकामेभ्यो गन्धर्वेभ्यः सोमः क्रीयते। एतच्चैतरेय-ब्राह्मणे पञ्चमाध्यायस्य प्रथमे खण्डे प्रपञ्चितम्।) यस्तावत् सर्वात्मना मामुपास्ते स आर्त्विजीनो[2] भवति, ममैव च प्रसादेन प्रभूतं दक्षिणादिकं लभते ॥२॥

आहनसम्—the meaning of the word is doubtful Here it seems to mean striking, exciting, or foaming, fermenting Yāska explains आहनसः as आहननवन्तः बधनवन्तः (Nir. iv. 16) which is explained by Durga as सम्मोहयितार, causing infatuation or delusion Under ix 75 5 S says ग्राव्णामभिषुत्येन हन्तारः, अभिहन्यमानाः, अभिषूयमाणाः, स्तुतिमन्तः मदवन्तो वा

त्वष्टारम्—"Tvaṣṭṛ is the Hephaistos or Vulcan of the Indian pantheon, the ideal artist, the divine artisan, the most skilful of workmen." (Muir) "He is the power which shapes the

[1] *Cf.* इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति। यन्ति प्रमादमतन्द्राः॥ viii. 2.18.

[2] यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति। *Mahābhāṣya* (ed Kielhorn), Vol. I, p. 3.

germ in the womb for men and animals alike he fashions husband and wife for each other from the womb and presides over generations " (KEITH)

भगम्—The god of fortune and one of the Adityas Av *bagha* god

द्रविणम्—AV reads the pl द्रविणा for द्रविणम् For ing see p 126

हविष्मते—not analysed in the Pada text because हविस् is a भ here and not a पद *Cf* v 18 1 पुरू सहस्रा नि शिशामि दाशुषे यथा सोमाय उक्थिनो भमन्दिषु ।

सुप्राव्ये—As Geldner points out सुप्रावी in ii 26 1 is explained by प्रविदि in the next stanza S derives it from अव् to aid, western scholars evidently derive it from वी 'to lead, guide and think the word means 'well advised', 'well *prompted* The analysis in the Padapatha is peculiar As प्रावी occurs several times, सु has evidently been compounded with प्रावी so we should expect the avagraha after सु but we find the avagraha after सुप्र The *Atharva Veda Pratiśakhya* notes the peculiarity in its rule सुप्राव्या च iv 11 In our stanza AV reads सुप्राव्या which Bloomfield regards either as the feminine Nom sing or neut Acc plural of सुप्राव्य but which the com on the Atharvaveda Pratiśakhya regards as the Inst sing of सुप्रावी—अवते सुप्रपूर्वस्य टाशब्द स्वरित पर । सुप्राव्येति तृतीयाया नैप्रच्छन्दसि स्वर्यते ॥ The opposite of सुप्रावी is दुष्प्रावी iv 25 6 (analysed as दुः प्र ऽ अव्य) देवावी occurs several times in RV

3

| | |
|---|---|
| अहं राष्ट्री संगमनी वसूनां | अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । |
| चिकितुषी प्रथमा यज्ञियानाम् । | चिकितुषी । प्रथमा । यज्ञियानाम् । |
| तां मा देवा व्यदधुः पुरुत्रा | ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । |
| भूरिस्थात्रां भूर्यावेशयन्तीम् ॥३॥ | भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥३॥ |

I (*aham*) am queen (*rāṣṭrī*), gatherer (*saṅgamanī*) of treasures (*vasūnām*), the wise (*cikituṣī*), first (*prathamā*) of those that are worthy to be worshipped (*yajñiyānām*). Me (*mā*) as such (*tām*) the gods (*devāḥ*) have put (*vyadadhuḥ*) in many places (*purutrā*), making me dwell in many abodes (*bhūri sthātrām*) and enter into (*ā veśayantīm*) many (*bhūri*).

अहं राष्ट्री। ईश्वरनामैतत्। सर्वस्य जगत ईश्वरी। तथा वसूनाम् धनानां सङ्गमनी सङ्गमयित्री उपासकानां प्रापयित्री। चिकितुषी यत् साक्षात्कर्तव्यं परं ब्रह्म तज् ज्ञातवती स्वात्मतया साक्षात्कृतवती। अत एव यज्ञियानाम् यज्ञार्हाणां प्रथमा मुख्या। या एवगुणविशिष्टाहं तां [मा] मा भूरिस्थात्राम् बहुभावेन प्रपञ्चात्मनावतिष्ठमानाम्। भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीम् जीवभावेनात्मानं प्रवेशयन्तीम् ईदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवा विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानाद्* यद् यत् कुर्वन्ति तत् सर्वं मामेव कुर्वन्तीत्यर्थः ॥३॥

अथर्ववेदभाष्यम्। अद्वितीयब्रह्मात्मिका अहं राष्ट्री। ईश्वरनामैतत्। कृत्स्नस्य दृश्यप्रपञ्चस्य राज्ञी नियन्त्री। अत एव वसूनाम् धनानां सङ्गमनी सङ्गमयित्री, उपासकानां फलस्य प्रापयित्री। चिकितुषी यत् साक्षात्कर्तव्यं परं ब्रह्म तज् ज्ञातवती स्वात्मतया साक्षात्कृतवती। कित ज्ञाने [धा° ३।१९] इत्यस्मात् लिट' क्वसुः। तदन्तात् 'उगितश्च' [४।१।६] इति ङीप्। अत एव यज्ञियानाम् यज्ञार्हाणां देवानाम् प्रथमा मुख्या। यज्ञर्त्विग्भ्यां घ-खञौ [५।१।७१] इत्यर्हार्थे घ प्रत्यय। तां तादृशीं मा.मा भूरिस्थात्राम् बहुभावेन प्रपञ्चात्मना स्थितावस्थानां भूरि बहुलं यथा स्यात् तथा आवेशयन्तीम्, उपासकान् प्रापयन्तो देवाः पुरुत्रा बहुषु स्थानेषु व्यदधुः विदधति कुर्वन्ति। 'देव मनुष्य-पुरुष-पुरु-मर्त्येभ्यो' [५।४।५६] इति सप्तम्यर्थे त्रा-प्रत्ययः। उक्तप्रकारेण वैश्वरूप्येणावस्थानाद् यद् यत् कुर्वन्ति देवास्तत् सर्वं मामेव कुर्वन्तीत्यर्थः ॥३॥

---

* Many printed editions wrongly place a full stop here

दीपिका। अहमेव दिवश्च पृथिव्याश्चेशे, अहमेव द्विपदश्चतुष्पदश्चेशे। ममैव प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, ममैव प्रशासने द्यावापृथिव्यौ विधृते तिष्ठतः, ममैव प्रशासने निमेषा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्ति, ममैव प्रशासने सागराः सरितः सरस्यश्च सम्यक् स्यन्दन्ते, किं बहुना समग्रस्य ब्रह्माण्डस्य सम्राडहमेवास्मि। दिवि वा भुवि वा यानि मणिरत्नानि विलसन्ति तानि सर्वाणि मदायत्तानि। देवेषु मनुजेषु च ये धनिकधुरीणास्तेषामपि मनोरथानामप्यभूमिर्या सम्पत् सापि ममैव वशे वर्तते। अत एव च वाग् वै वसिष्ठेति [श॰ ब्रा॰ १४।९।२।२] श्रुतिर्मां वसिष्ठेति व्यपदिशति। मम भक्तेषु यो य ऐश्वर्यं कामयते तं तं तेन योजयामि। किञ्च भूतं भवद्भविष्यच्च व्यवहितं विप्रकृष्टञ्च सर्वमेव करामलकवत् पश्यामि, मत्त एव सर्वस्य प्रवृत्तेः। "इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥" "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" इत्यादिन्यायेन विश्वं समग्रं समुद्भासयित्र्यहं सर्वज्ञानानामायतनम्। ये च देवा यज्ञेषु हूयन्ते तेषु च मम प्राधान्यं निर्विवादम्, वाङ्मुखेनैव यज्ञस्य प्रवृत्तेः। अहं तावत् तेषु तेषु प्राणिजातेषु नानाभावेनावस्थिता। सरीसृपाणां स्फुरितेषु विहगानां कूजितेषु पशूनां वाशितेषु नराणां च भाषितेषु ममैवाभिव्यक्तिर्भवति। सुसंस्कृता च वाक् प्रथमतो मन्त्रेष्वेवावस्थिता ततश्च वेदानां समनुशीलनेन तस्या बहुलप्रचारः समजनि, एवम् ऋषिषु प्रविष्टाहं देवैर्बहुधा प्रचारिता। तदेतदपिणाप्युक्तम्—

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते॥ इति॥३॥

राष्ट्री—*fem. of* राष्ट्र *formed with* ङन् *from* राज्. *Cf.* जोष्ट्री. Under viii 100 10 यद्वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा। चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम॥ "When, uttering words that no one comprehended, Vāk, Queen of Gods, the Gladdener, was seated, the heaven's four regions drew forth drink and vigour now whither hath her noblest portion vanished?" S. explains it as राजनशीला. Under AV iv. 1. 2 S. says, ईश्वरनामैतत्। राष्ट्री सर्वजगद्व्यवहारस्य ईश्वरा नियन्त्री। *Cf.* AB iv 2 वाग् वै राष्ट्री. Acc. to some scholars राष्ट्री (ruler) is masc. V. G. S., p. 87 top.

सङ्गमनी वसूनाम्—*Cf* TS III 5 1 1 निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती holder and gatherer of riches clad in all rich forms (K) In x 48 1 Indra says अहं धनानि संजयामि शश्वत *Cf* गोभिरश्वैर्विश्वसुभिर्हिरण्यैः VII 9 6 Some explain, because I am the gatherer up of treasures therefore I am the first of those that merit worship—कार्यलिङ्ग

चिकितुषी—See p 138 प्रथमा—See p 157

व्यदधुः पुरुत्रा—*Cf* RV x 71 3 यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् । तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ With sacrifice the track of Vak they followed and found her harbouring with the Rs s They brought her dealt her forth in many places seven singers make her tone resound in contrast Both stanzas are in reality addressed to Vac speech the atmastuti 10 125 containing perhaps, the later elaboration of the idea *Repetitions*

पुरुत्रा—Note that though त्र and त्रा are added in practically the same sense (V G S p 213) त्रा is accented while त्र (त्रल्) accents the immediately preceding syl In the Pada text also त्रा is separated by अवग्रह but त्र is not so separated Doubtless it is the character of the form to which त्र is attached as being pronominal roots that prevents its separation from them rather than anything in the suffix itself The suffix त्र is preserved in Beng दवीत्तर which is formed by popular etymology from देवता Skt *puru* Av **pouru* O P *paru* Gk *polus* (from **palus*) Lith *pilus* I E **pllus*

भूरिस्थात्राम्—occurs only here in RV The accent shows that it is a बहुव्रीहि compound like *bhúri śr ṅga* many horned *bhuri karman* etc भूरि being formed with the उणादि suffix क्रिन् (अदि शदि भू शुभिभ्यः क्रिन् IV 65) is accented on the first syl lit becoming more and more increasing hence abundant स्थात्र is formed in the अधिकरण वाच्य and means station place The suffix त्र (ष्ट्रन्) was originally the primary ending त with a secondary र and was generally added in the करण or अधिकरण वाच्य

आवेशयन्तीम्—*Cf* अनेन जीवेनात्मनानुप्रविश्य—छा 6 3 2 AV reads आवेशयन्त which qualifies देवा TS III 5 1 1 however reads आवेशयन्ती,

4

| | |
|---|---|
| मया सो अन्नमत्ति यो विपश्यति | मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । |
| यः प्राणिति य ईं शृणोत्युक्तम् । | यः । प्राणिति । यः । ईम् । शृणोति । उक्तम् । |
| अमन्तवो मां त उप क्षियन्ति | अमन्तवः । माम् । ते । उप । क्षियन्ति । |
| श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४॥ | श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥४॥ |

By me (*mayā*) he (*saḥ*) eats (*atti*) food (*annam*) who (*yaḥ*) sees (*vipaśyati*), who breathes (*yaḥ prāṇiti*), who (*yáḥ*) hears (*śṛṇoti*) what is spoken (*īm uktam*) Unknowing (*amantavaḥ*), they (*te*) dwell (*upakṣiyanti*) on me (*mām*) Hear (*śrudhi*), O illustrious one (*śruta*) That which is creditable (*śraddhivam*), I say (*vadāmi*) unto you (*te*)

योऽन्नमत्ति स भोक्तृशक्तिरूपया मया एव अन्नमत्ति । यः च विपश्यति आलोकयतीत्यर्थः । य. च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति सोऽपि मयैव । य. च [ईम्] उक्तं शृणोति । श्रु श्रवणे [धा° १।९२४] । 'श्रुवः शृ च' [३।१।७४] इति श्रुधातोः शृ-भावः । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवः अमन्यमाना अजानन्त उपक्षियन्ति उपक्षीणाः संसारेण हीना भवन्ति । मनेरौणादिकस्तु-प्रत्ययः । नञ्समासे व्यत्ययेनान्तोदात्तत्वम् । यद्वा भावे तु-प्रत्ययः । ततो बहुव्रीहौ 'नञ्सुभ्याम्' [६।२।१७२] इत्युत्तरपदान्तोदात्तत्वम् । माम् अमन्तवः मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत विश्रुत सखे, श्रुधि मया वक्ष्यमाणं शृणु । छान्दसो विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यः०' [६।४।१०२] इति हेर्धिभावः । किं तच्छ्रोतव्यम् ? श्रद्धिवम् । श्रद्धिः श्रद्धा तया युक्तम् । श्रद्धायत्नेन लभ्यमित्यर्थः । 'श्रदन्तरोरुपसर्गवद्वृत्ति'रिष्यते [३।३।१०६ का*] इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वात् 'उपसर्गे घोः किः' [३।३।९२] इति कि-प्रत्ययः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥४॥

---

* वचनात् Mallinātha on *Śiś* viii. 11. This is not found in *Mbh* M[2] wrongly gives the reference as 1 4 57 2

wonder that we should find forms like बिभ्रसेत्, भाग्रसेयुः, etc., in class. Skt.

ईम्—anticipates उग्रम्. See p. 174.

अमन्तवः—अमन्तु occurs in x. 22. 8 also: अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः। "Around us is the Dasyu, riteless, void of sense, inhuman, keeping alien laws."

क्षियन्ति—See p. 193.

श्रुधि—See p 122.

श्रुत—S appears to be right in regarding it as a vocative. Most European scholars think it is the 2. plural root-aorist imperative of श्रु Peterson translates: "Listen, one and all, this is a true thing I say." This is ingenious but not at all convincing Though both finite verbs and vocatives are liable to loss of accentuation, श्रुत as a finite verb would have been accented as beginning a new sentence Pāṇini distinctly says तिङ्ङतिङः *i.e.*, a finite verb is unaccented *except after a finite verb* And the plural श्रुत almost immediately followed by the singular ते would be singularly inappropriate Ludwig in his commentary takes श्रुतश्रद्धिवम् as one word and explains what is worthy of credence acc. to tradition. In his translation he takes श्रुत as the 2. pl. imperative of श्रु

श्रद्धिवम्—worthy of credence, true It is a peculiar form with the sense of a gerundive It had already become rare in the Vedic period and AV. substitutes the more usual श्रद्धेय for it

5

अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥५॥

अहम् । एव स्वयम् । इदम् वदामि ।
जुष्टम् देवेभिः उत । मानुषेभिः ।
यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि ।
तम् । ब्रह्माणम् । तम् ऋषिम् ।
तम् । सुऽमेधाम् ॥५॥

I of my own self (*aham evá svayam*) say (*vadāmi*) this (*idam*), welcome (*juṣṭam*) to gods (*devebhiḥ*) and (*uta*) men (*mā́nuṣebhiḥ*) whomsoever (*yam*) I desire (*kāmaye*) him (*tam-tam*) I make (*kṛṇomi*) mighty (*ugrám*), him (*tam*) priest (*Brahmā́ṇam*), him (*tam*) the seer (*ṛṣim*), him (*tam*) the sage (*su-medhā́m*).

अहं स्वयमेव इदम् वस्तु ब्रह्मात्मकं वदामि उपदिशामि। देवेभिः देवैरिन्द्रादिभिरपि जुष्टम् सेवितम्। उत अपि च मानुषेभिः मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तंतम् पुरुषम् उग्रं कृणोमि सर्वेभ्योऽधिकं[1] करोमि। तम् एव ब्रह्माणम् स्रष्टारं करोमि। तम् एव ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि। तम् एव सुमेधाम् शोभनप्रज्ञं करोमि ॥५॥

अथर्ववेदभाष्यम्। अहं स्वयमेव आत्मनैव। [एवकारः] 'नान्योऽस्ति ममोपदेष्टा' इत्यवधारणार्थः। इदम् आपरोक्ष्येणानुभूयमानं ब्रह्मात्मकं वस्तु वदामि लोकहितार्थम् उपदिशामि। तद् विशेष्यते। देवानाम् इन्द्रादीनां जुष्टं प्रियम् उत मानुषाणाम् मनुष्याणामपि प्रियम् परानन्दरूपत्वात्। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' [बृ आ ४।३।३२] इति श्रुतेः। यद्वा देवमनुष्यादिभिः सेवितम् इदं वक्ष्यमाणं मदीयं माहात्म्यम् अहम् एव स्वयम् वदामि प्रकटयामीत्यर्थः। किं पुनस्तद् इत्याह— यम् इति। यं कामये। तंतम् इति प्रतिनिर्देशस्य वीप्सितत्वाद् अत्रापि वीप्सा द्रष्टव्या। यंयं पुरुषं रक्षितुम् अहं वाञ्छामि तंतं कृत्स्नं पुरुषम् उग्रं कृणोमि। सर्वेभ्योऽधिकं[1] दुष्प्रधर्षं करोमि। यद्वा उग्रः ईश्वरः। जगन्निर्माणसमर्थमीश्वरं करोमि। तम् एव ब्रह्माणं स्रष्टारं करोमि, तथा तम् ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि, तम् एव सुमेधाम् शोभनप्रज्ञं च करोमि। एवं सर्वजगदधिपत्य-ब्रह्मात्मकत्वं ममात्मन्याविष्कृतम् ॥५॥

[1] Strict grammar as well as logic requires सर्वेभ्योऽधिकं or सर्वे-भ्योऽधिकम्.

अथर्ववेदभाष्यम्। यः भोक्तृजनः अन्नम् अत्ति सः भोक्तृशक्तिरूपया मया एव अन्नम् अत्ति। यः च जनः विपश्यति विविधं जगत् चक्षुषा साक्षात्करोति। यः च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति। अन प्राणने [धा° २।६०]। अदादित्वाच्छपो लुक्। रुदादिभ्यः सार्वधातुके [७।२।७६] इतीडागमः। अनितेः [८।४।१९] इति णत्वम्। ईम् इदम् उक्तं स्वरूपं यः च पुरुषः शृणोति श्रोत्रेन्द्रियेण गृह्णाति ते सर्वेऽपि तत्तदुक्तात्मना अवस्थितया मयैव तत्तद्व्यापारं कुर्वन्तीत्यर्थः। शृणोतीति। श्रु श्रवणे [धा° १।९२४]। श्रुवः शृः च [३।१।७४] इति श्नुप्रत्ययः धातोः शृभावश्च। ये ईदृशीम् अन्तर्यामिरूपेण स्थितां मां न जानन्ति ते माम् अमन्तवः अमन्यमाना अजानाना मद्विषयज्ञानरहिताः उप क्षियन्ति उपक्षीणाः संसारेण निहीना भवन्ति। मनेरौणादिकस्तुप्रत्ययः। नञ्समासे [व्यत्यये]नान्तोदात्तत्वम्। यद्वा भावे तु-प्रत्ययः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' [६।२।१७२] इत्युत्तरपदान्तोदात्तत्वम्। हे श्रुत विश्रुत हे सखे श्रुधि मयोक्तं शृणु। छान्दसो विकरणस्य लुक्। 'श्रुशृणुपॄकृवृभ्यः०' [६।४।१०२] इति हेर्धिभावः। अहं ते तुभ्यं श्रद्धेयं श्रद्धातव्यम्। श्रद्धा भक्तिः। तया प्राप्यं परतत्त्वस्वरूपं वदामि उपदिशामि। श्रद्धेयम् इति। अचो यत् [३।१।९७] इति धात्रो यत्प्रत्ययः। ईद्यति [६।४।६५] इतीकारः॥४॥

दीपिका। "दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे। केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः॥" इति न्यायेन ये सम्यग् वा असम्यग् वा पश्यन्ति, ये सम्यग् वा असम्यग् वा शृण्वन्ति, किं बहुना येषामेव प्राणा वर्तन्ते तेषामाहार्यसम्पादनं मयैव विधीयते। मया प्राणिनः प्राणवन्त इति विद्धि। एते सर्वे मामेवोपजीवन्ति दौर्भाग्यात्तु नैतदवबुध्यन्ते। स्वो हि भावो मनुष्याणामात्मनो हृदयानुमानेन दर्शनं नाम। सत्यसंहिताश्च देवाः, अनृतसंहिता मनुष्याः।[1] तस्यै तदाश्चर्यं यत् सर्वं सत्यं वदितुमसमर्थस्त्वं मामप्येवं-

[1] AB. 1. 6

वादिनीं न श्रद्धास्यसि। तत् तु न समीचीनं स्यात्। सत्कार्यपरम्परया प्रज्ञाप्रकर्षेण च शारदसुधाकरसमुज्ज्वलं यशःपटलं त्वया समधिगतम्, उपदेशभाजनत्वं च समासादितम्। अतः सर्वथा सत्यमेवैतत् ते पुरतो विवृणोमि, मास्म ते विशङ्का भूत्। न खलु 'अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते' इतिवद् व्यामोहकम्, न वा 'शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब' इतिवत् प्ररोचकम् अश्रद्धेयं किमपि प्रलपामि। प्रायेण त्वयापि बहुशः प्रत्यक्षीकृतं यद् वाच उत्क्रान्तौ शरीरं काष्ठकुडयकल्पं सम्पद्यते, दर्शनस्य श्रवणस्य प्राणनस्य च वार्ताप्यस्तमेतीति। तथा च श्रुतिः—"वाचं देवा उपजीवन्ति विश्वे। वाचं गन्धर्वाः पशवो मनुष्याः। वाचीमा विश्वा भुवनान्यर्पिता।" [तै॰ ब्रा॰ २।८।८।४] इति। "वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती, प्राणान् पशुषु प्रजां मयि च यजमाने च" [तै॰ सं॰ ३।१।१०।२] इति। "वाग् वै सर्म" [ऐ॰ ब्रा॰ १०।८] इति च ॥४॥

मया सो अन्नमत्ति—Both here and under AV iv 30 4 S supplies स यः which he construes with अत्ति and explains—he who eats food does so through me, etc This अध्याहार to preserve symmetry is however, a bit far fetched Vak is solicited for food and vigour in viii 100 11 देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु॥ 'The gods generated Vak the goddess, animals of all forms speak her May she, the Gladdener, yielding food and vigour, the milch cow Vāk, properly praised, approach us' Cf x 48 1 अहं दाशुषे विभजामि भोजनम्

For सो अन्नमत्ति AV has योऽन्नमत्ति The metre shows that the RV form is original

विपश्यति—Cf x 187 4 यो विश्वाभि विपश्यति भुवना सं च पश्यति।

प्राणिति—Note that it is not analysed in the Pada text.* AV. reads प्राणति for प्राणिति. Similarly we have in AV. यश्च प्राणति यश्च न though SB, TB. and BU show the normal प्राणिति Similarly SB has कर्ण श्रृत प्राणिति चाप वाग्निति where GB has प्राणति चापानति च. No

* प्राणीत्यानति नेङ्ग्ये प्राप्तो द्वीवेकंगम्।

दीपिका। देवानां मनुष्याणाञ्च प्रियमिदं रहस्यं भक्तजनानुकम्पया स्वयमेव सुहृद्भूय विवृणोमि। अतोऽस्य सत्यतायां लेशतोऽपि संशयो न कार्यः। भक्ताश्चोपासकाश्च भक्तिप्राग्भारविवशीकृतस्वान्ताः सर्वथा विचारविधुरा भजनीयस्य परमाणुप्रमाणानपि गुणान् पर्वतीकुर्वन्ति। आश्रिताश्च शरणागताश्च शरण्यस्य सौमनस्यमेवाधिगन्तुकामास्तस्य प्रशंसायां सहस्रमुखतामात्मन आविष्कुर्वन्ति, न च गणयन्त्युत्कटतममप्यतिशयोक्तिजातम्। दूताश्च स्वभावत एव यथाभूतं वस्तुतत्त्वं विपर्यासयन्ति। 'नाहं दूती तनोस्तापस्तस्याः कालानलोपमः' इत्यालङ्कारिकाणामुदाहरणमेवात्र साक्षिभूयमावहति। परं स्वप्नेऽपि भ्रमप्रमादविप्रलिप्साकरणापाटवादिभिरनाक्रान्तायाः परापराणां परमया परमेश्वर्या मया यदुच्यते, देवानां मनुष्याणां च हितकाम्यया तेषां हृदयाह्लादकरं यदुपदिश्यते, सर्वथा श्रद्धेयतममेव तत्।

जगतीतलस्थं निखिलं बलं च प्रज्ञानं च मदधीनमेव। देवो वा मर्त्यो वा य एव बलं कामयते स चेन्मे बहुमतस्तस्तमोजिष्टं बलिष्टं च विदधामि, येन सुरेषु वाप्यसुरेषु वा, नरेषु वा पशुषु वा नैव प्रभवति कोऽपि तमभिभवितुम्। यो वा 'धिग् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्' इति मन्यमानः शारीरं शौर्यं श्लाघ्यचेष्टितं समावृण्वन् सर्वथा तदास्थाविरहितः परलोकसाधनीं प्रज्ञां प्रार्थयते तस्य भक्तेः कर्मणश्च तारतम्येन तं सर्वजनवरणीयं बृहस्पतिप्रतिमं पुरोधसं वा विदधामि, भूपालकुलशालितचरणयुगलम् इन्द्रादीनामपि 'पुरोयं' स्वार्थं मन्त्रद्रष्टारं वा सम्पादयामि, सर्वत्रैवाप्रतिहतभक्तिप्रसरमतीन्द्रियाणामपि भावानां समवेक्षितारं त्रिभुवनशरण्यं देवदानवादिसर्वसत्त्ववरेण्यं वा विदधामि। सर्वरूपा मदीयेच्छैवात्र नियामिका, यदेवेच्छामि तदेव तदात्व एव सत्यं सञ्जायते। सर्वथा भक्तानां कल्पलतैवास्मि। श्रुतिरप्येतदेव समुद्घोषयति— यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छन् देवास्तपसा श्रमेण। तां देवीं वाचं हविषा यजामहे। सा नो दधातु सुकृतस्य लोके॥ [तै॰ ब्रा॰ २।८।८।५] इति। वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः। तस्यै द्वौ स्तनौ देवा उपजीवन्ति— स्वाहाकारं च वषट्कारं च, हन्तकारं मनुष्याः, स्वधाकारं पितरः, [illegible]ः। बृ॰ आ॰ उ॰ ५।८। इति च॥५॥

स्वयम्—from the stem *svai* after the analogy of अयम्, though popularly it is dissolved as सु अयम् on the principle सर्वे कालमात्मीयं पश्यति

जुष्टम्—Note that unlike most past participles जुष्ट is accented on the first syl नित्यं मन्त्रे ६।१।२१० (*following* जुष्टार्पिते च च्छन्दसि ६।१।२०९) As the word is found thrice accented on the second syl in AV later grammarians repudiate the rule नित्यं मन्त्रे and stick to जुष्टार्पिते च च्छन्दसि It was probably because जुष्ट lost the sense of a participle and came to be used as an ordinary adjective in the sense of *agreeable, pleasing that the accent was shifted* *Cf.* घृतं which is evidently a past participle (उ° ३।८९) but which along with हस्त, गर्त, मर्त, etc, is accented on the first syl

देवेभिरुत मानुषेभि—AV reads देवानामुत मानुषाणाम् When क्त is added to denote past time the Instr is used in connexion with it, when it denotes present time the Gen is used acc to क्तस्य च वर्तमाने 2 3 67 जुष्ट is read in the list of words with क्त denoting present time

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि॥
हृष्टतुष्टौ तथाकान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः॥

*Mahābhāṣya*, 3 2 188 The Dat is also often used with जुष्ट (क्रियार्थोपपदस्य चतुर्थी or तादर्थ्ये चतुर्थी) *e g* जुष्टं जनाय दाशुषे i 11 4

तम्—Rhetoricians point out that the repetition of *तम्* makes the repetition of तम्, unnecessary, the same however, can hardly be said of तम् which is not उद्देश्य but प्रतिनिर्देश्य Because of the वीप्सा of तम् we are to understand another तम् after तम्

तम्—there will be अनुषङ्ग of one तम् from कृणोमि, etc, in each case—*i e* तं ब्रह्माणम्, etc *Cf* *CU* v 10 6 यो ह वा ज्येष्ठं च श्रेष्ठं च वेद etc

ब्रह्माणम्—superintending priest "ब्रह्मैव विद्यया यज्ञं भिषज्यति।" See *Vedic Index*, II 77 78 *Cf.* अथैव यथैवं तु ब्रह्मा ब्रह्माणमर्हति वाचमनुयुवन

शासम् x. 107. 6 (तमेव दक्षिणाया दातारम् · यज्ञन्यम् .. अध्वर्युम्, सामगा साम्नां गातारम् ... उक्थशासं होतारम्. S)

सुमेधाम्—occurs also in प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति x. 47. 6.* It is evidently a contracted form of सुमेधसम् for metrical reasons. See Lanman's *Noun-Inflection in the Veda*, p. 552, *Alt-indische Grammatik*, III, 284 β. Skt. *medhā'*, Av. *mazdā*, from **maz-dhā* from **mndh-tā*.

सुमेधाम् appears like an anticlimax after ब्रह्माणम् and ऋषिम् who certainly can never be accused of lacking in मेधा. Can we not regard the last तम् as पुरुष and construe सुमेधाम् with ऋषिम् or with both ब्रह्माणम् and ऋषिम्? The figure of speech will then be सार or climax (उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते।)

6

| | |
|---|---|
| अहं रुद्राय धनुरा तनोमि | अहम् । रुद्राय । धनुः । आ । तनोमि । |
| ब्रह्मद्विषे शरवे हन्तवा उ । | ब्रह्मऽद्विषे । शरवे । हन्तवै । ऊँ इति ॥ |
| अहं जनाय समदं कृणो- | अहम् । जनाय । सऽमदम् । कृणोमि । |
| म्यहं द्यावापृथिवी आ विवेश ॥६॥ | अहम् । द्यावापृथिवी इति । आ । विवेश ॥६॥ |

I (*aham*) stretch (*ā tanomi*) the bow (*dhanuḥ*) for Rudra (*Rudrā'ya*) for his arrow (*śarave*) to kill (*hantavai u*) the Brahman-hater (*brahma dviṣe*). I (*aham*) make (*kṛṇomi*) strife (*samádam*) for the people (*janāya*). I (*aham*) have entered (*ā viveśa*) heaven and earth (*Dyā'vā-pṛthivī*)

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य। षष्ठ्यर्थे चतुर्थी [२।३।६२।१]। महादेवस्य धनुः चापम् अहम् आतनोमि ज्यया ततं करोमि। किमर्थम्? ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै

* In RV. viii. 5. 6 सुमेधाम् is fem.

हन्तु हिंसितुम्। हन्तेः 'तुमर्थे सेसेन्' [३।४।९] इति तवै-प्रत्ययः। 'अन्तश्च तवै युगपत्' [६।१।२००] इत्याद्यन्तयोर्युगपदुदात्तत्वम्। शॄ हिंसायाम् [धा° ९।१६] इत्यस्मात् 'शॄस्वृस्निहि'' [उ° १।११] इत्यादिना उ-प्रत्ययः। 'क्रियाग्रहणं कर्तव्यम्' [१।४।३२ भा°] इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। उ-शब्दः पूरकः। अहम् एव समदम्। समानं माद्यन्त्यस्मिन् (?) इति समत् संग्रामः। स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि करोमि। तथा द्यावापृथिवी दिवञ्च पृथिवीञ्च अन्तर्यामितया अहमेव आविवेश प्रविष्टवती ॥६॥

अथर्ववेदभाष्यम्। पुरा त्रिपुरविजयसमये रुद्राय। षष्ठ्यर्थे चतुर्थी। रुद्रस्य महादेवस्य धनुः अहम् आ तनोमि आततज्यं करोमि। किमर्थम्? ब्रह्मद्विषे ब्राह्मणानां द्वेष्ट्रे शरवे। शॄ हिंसायाम् [धा° ९।१६]। 'शॄस्वृस्निहि'' [उ° १।११] इत्यादिना उ-प्रत्ययः। हिंसकाय। उभयत्र 'क्रियाग्रहणं कर्तव्यम्' [१।४।३२ भा°] इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। ब्रह्मद्विषं तद् त्रिपुरनिवासिनम् असुरगणं हन्तवै हन्तु हिंसितुम्। हन्तेः 'तुमर्थे सेसेन्'' इति तवै-प्रत्ययः। 'अन्तश्च तवै युगपत्' [६।१।२००] इत्याद्यन्तयोर्युगपदुदात्तत्वम्। उशब्दः पूरणः। अहम् एव जनाय स्तोतृजनार्थं समदम्। समानं माद्यन्त्यस्मिन् (?) इति समत् संग्रामः। तं कृणोमि करोमि तथा द्यावापृथिवी द्यावापृथिव्यौ अहम् आ विवेश अन्तर्यामित्वेन प्रविष्टवती ॥६॥

दीपिका। या च का च मत्कृतिर्मम कर्मैव तत्। का कथा पार्थकर्णादिकीटानाम्, यो हि रुद्रः पिनाकेन त्रिभुवनं भाययति, उद्दीपितामर्षाद् यस्माद् ब्रह्मद्विषः सन्त्रस्यन्ति, उत्पन्नमस्य तस्य साधूनां परित्राणाय दुष्कृतां च विनाशाय धनुषि ज्यारोपणं मदायत्तमेव। भक्तानां चाह्वानमनुरुध्यमानया 'सयत्क्षयण्या' मया समरेष्वपि व्याप्रियते, श्रुतिविषयगुणया च मया विश्वं व्याप्याप्रर्यायते। "यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश। य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः॥" [श्वेताश्व° २।१७] इति श्रुतिरपि मामेव सर्वगतत्वेन वर्णयन्ती संगीति। ॥६॥

ᵃडाद—Dativus commodi

रुद्राय धनुरातनामि—In RV Rudra is well known for his bow and arrows (ii 33 10 11 v 42 11), he is called स्थिरधन्वन् and क्षिप्रेषु in इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने RV vii 46 1 What Vāk means is that even the great archer Rudra owes his skill in archery to her Contrast अहं वज्रं मखमे घृणा ददे v 49 2

ब्रह्मद्विषे शरवे हन्तवे—ब्रह्मद्विषे is the obj of हन्तवे and should have been put in the Acc The dative infinitive "is commonly used without an object, hence a dative often appears beside it by attraction instead of an accusative MACDONELL *Vedic Grammar* p 408 *Cf* इमवे सूर्याय x 14 12 (p 281), ब्रह्माण इन्द्र महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ v 31 4 the Brahmans with their songs exalting Indra strengthened him with hymns to slay the serpent मय पतिभ्यो जनये परिष्वजे AV xiv 1 46 a joy to husbands (it is) to embrace a wife See also under पाविप्यामश्वनेजनाय SB i 8 1 1

In x 182 3 तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ the Dat in ब्रह्मद्विषे has been changed into the Nom May he whose head is flame burn the Brahman hating Raksasas in order that his arrow may slay them —thus translates Bloomfield who rightly regards x 182 3 as patterned upon x 125 6

ब्रह्मद्विषे—Dative by Attraction Regular form is ब्रह्मद्विषम्

शरवे—Final Dative For mg see p 189 f n 3 and p 191

हन्तवै—Dative infinitive See p 257

आ ववेश—In the Vedas the Perfect is used even when there is no परोक्षत्व Panini s rule is छन्दसि लुङ् लङ् लिटः ३ ४ ६

अहं जनाय समदं कृणोमि—The suggested sense is that she is also सहकृत् समत्सु (ii 12 3) like Indra *cf* वागसेन्द्री सपत्नक्षयणी TS i 6 10 6 For समद् see p 168 समदिति स्त्री लड़ सङ्ग्रामनाम सम मद माद्यन्ति यौडारो यात इति। Haradatta समदो वाच सम्मदो वा मदते Vir ix 17 Indra gives specific instances of his help to mortals

अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम्।

यत् पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि॥ x 48 8

अहं द्यावापृथिवी आविवेश—She pervades heaven and earth *Cf* गीता— मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव In Babylonian mythology the word of Bel Marduk is described as "a net of majesty that encompasseth heaven and earth

7

अहं सुवे पितरमस्य मूर्धन्
मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वो-
तामूं द्यां वर्ष्मणोप स्पृशामि ॥७॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् ।
मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे ॥
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा ।
उत । अमूम् । द्याम् । वर्ष्मणा । उप ।
स्पृशामि ॥७॥

I (*ahám*) give birth to (*suve*) the father (*pitáram*) on his head (*asya mūrdhán*), my (*máma*) origin (*yóniḥ*) is within the ocean (*samudré*) in the waters (*apsú antáḥ*). Thence (*tátaḥ*) I spread through (*vitiṣṭhe*) all (*viśvā*) beings (*bhúvanā ánu*), and (*uta*) I touch (*úpaspṛśāmi*) yonder (*amū́m*) sky (*dyā́m*) with my summit (*varṣmáṇā*).

'द्यौः पिता' [तै॰ ब्रा॰ ३।७।५।५] इति श्रुतेः पिता द्यौः। पितरम् दिवम् अहं सुवे प्रसुवे जनयामि, 'आत्मन आकाशः सम्भूतः' [तै॰ आ॰ ८।१] इति श्रुतेः। कुत्रेति तदाह—अस्य परमात्मनो मूर्धन् मूर्धन्युपरि। कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते, तन्तुषु पट इव। मम च योनिः कारणं समुद्रे। समुद्द्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा। तस्मिन् अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद्ब्रह्मचैतन्यं तन्मम कारणमित्यर्थः। यत ईदृग्भूताहमस्मि ततः हेतोः विश्वा विश्वानि सर्वाणि [भुवना] भुवनानि भूतजातानि अनुप्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि। 'समवप्रविभ्यः स्थः' [१।३।२२] इत्यात्मनेपदम्। उत अपि च अमूं द्याम् विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उपस्पृशामि। यद्वा, अस्य भूलोकस्य मूर्धन् मूर्धन्युपरि अहं पितरम् आकाशं सुवे। समुद्रे जलधौ अप्सु उदकेषु

अन्तः मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते। यद्वा, समुद्रे अन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्मचैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यद् समानम् ॥७॥

अथर्ववेदभाष्यम्। अस्य दृश्यमानस्य प्रपञ्चस्य मूर्धन् मूर्धनि उपरिभागे सत्यलोके पितरं प्रपञ्चस्य जनकं विधातारम् अहं सुवे जनयामि। षूङ् प्राणिगर्भ-विमोचने [धा°१२२१]। अदादित्वाच्छपो लुक्। सृष्टसहितस्य जगतः कारणभूताया मम योनिः कारणं समुद्रे। समुद्रवन्त्यस्माद् भूतजातानीति समुद्रः परमात्मा। 'समुद्र एवास्य बन्धुः समुद्रो योनिः' [श° ब्रा° १०।६।४।१] इति वाजसनेयकश्रुत्या समुद्रशब्दवाच्यत्वं परमात्मनो दर्शितम्। तस्मिन् परमात्मनि अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद् ब्रह्मचैतन्यं तत् मम कारणमित्यर्थः। यद्वा समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये वाडववैद्युतरूपेण यत् तेजो वर्तते तदेव माध्यमिकवाग्रूपाया मम योनिः कारणम्। ततः तेजःकारणकत्वाद्धेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि वि चष्टे प्रकाशयामि। उत अपि च अमूं द्याम् विप्रकृष्टां दिवम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं ब्रह्मण्यध्यस्तं विकारजातं वर्ष्मणा देहेन कारणभूतमायात्मकेन उप स्पृशामि। यद्वा अस्य भूलोकस्य मूर्धन् मूर्धनि उपरि पितरम् आकाशम्। 'द्यौः पिता पृथिवी माता" [तै° ब्रा° ३।७।५।५] इति श्रुतेः। सुवे प्रेरयामि। तथा समुद्रे अन्तरिक्षे अप्सु अब्विकारेषु देवशरीरेषु मम कारणभूतं ब्रह्म व्याप्य वर्तते इत्यर्थः। शेषं पूर्ववत् ॥७॥

दीपिका। परिदृश्यमानस्य प्रपञ्चस्याध्यक्षोऽपि मयैव परमे व्योमनि प्रसूयते। अहं पुनः सागरसलिलेषु समधिगतजन्मास्मि। समुद्रे कल्लोलकोलाहलरूपेण लब्धात्मा क्रमेण वायवीयतरङ्गसङ्गेनोर्ध्वमुद्गच्छन्ती समग्रे जगति कृतपदा सती सुदूरवर्तिनं स्वर्लोकमपि शरीराग्रेण स्पृशामि। तथा च श्रुतिः—"देवीं वाचमजनयन्त यद् वाग् वदन्ति। अनन्तामन्तादधिनिर्मितां महीम्। यस्यां देवा अदधुर्भोजनानि। एकाक्षरां द्विपदां षट्पदां च। वाचं देवा उपजीवन्ति विश्वे।" [तै° ब्रा° २।८।८।४] इति ॥७॥

Bergaigne translates—"I give birth to the father even on the head" and adds in a foot-note: an enigma which seems to mean "I give birth to the heaven at the top of the heaven Vāc represents there particularly the roar of the thunder [which practically divests the sky of the clouds under which it had become invisible]" Geldner translates. "I give birth to (or, I drive) the father on the summit of this world." Hopkins translates "I beget the father of this (all) on the height, my place is in the waters, the sea, thence I extend myself among all creatures and touch heaven with my crown"

सुवे—सू would appear to have been originally used with reference to females and सन् with ref to males सूकर, सूनु, सुत, son, son, swine, etc, are from the same root. See p. 48.

पितरम्—Geldner points out that the father is the अध्यक्ष in x. 129 7 यो अस्याध्यक्षः परमे व्योमन् as whose mother or guide appears वाक् in this hymn and compares SB v 1.3 11: यदि वै प्रजापतिः परमस्ति—वागेव। (तदा ध्यक्षमप्स्वन्तःस्थेन पूर्वमवस्थानादिति भाव —S)

मूर्धन्—The Loc. would appear to have been an indefinite case in the beginning, so we find the Loc sing, of many stems in several I. E. languages without ending In Skt several an-stems have Loc singular without ending as also i- and u- stems which appear in the lengthened grade in the Loc. without ending. In the Av Gathic forms like *dam*, *dan*, 'in the house', in Greek, infinitives like *dómen* (दामन् to give), *ídmen* (विद्मन्, to know) and isolated forms like *aiés* (ever, always) and in Latin the preposition *penes* ('with') are instances of Locatives without ending.

मूर्धन् is mentioned in the Uṇādi rule: श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन्नर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्निति 1. 158 and is derived from मुर्वी or मुह् with कनिन् and is consequently accented on the first syllable. In Vedic literature, however, it is accented on the second syllable. Under i 59. 2 S. merely says: मूर्धन्निव

धीयत इति मूर्धा [निरुक्त ७।२७]। यद्वुचत्रिल्यादौ निपातनादूपसिद्धि । Av *kamərəδa* (= Skt * कमूर्धन् कमूर्धन्) head (of demons, animals, etc, Old English *molda* 'head', Gk. *blothros* (**mlothros*)

मम योनिरप्स्वन्त समुद्रे—वाक् remained in these waters as the roar of the sea, as the thunder and further as the cosmic principle in the ancient waters from which acc to x 121 7 the असु of the gods, i e, the wind came out. Geldner समुद्रे अप्स्वन्त occurs in x 45 3 also समुद्रे अन्त x 177 1 वाक् is also often identified with the ocean वाग् वै समुद्र Tandya B vii 7 9 वाग् वै समुद्रो न वै वाक् क्षीयते, न समुद्र क्षीयते। AB xxiii 1

तत—from there *Cf* ततो देवानां समवर्ततासुरेक x 121 7

वितिष्ठे—AV reads विशे

भुवना—AV has the later form भुवनानि Similarly व्रता नु विश्व व्रतपा अदाभ्य occurs in TB, but व्रतानि in AB *Variants*, III 67

वर्ष्मणा—वर्षिमन्, वर्षीयस, वर्षिष्ठ, etc, are from the same root वृ (स with *s* extension) The corresponding Greek word is *herma* prop support (for **wersma* I E **wersmn*)

8

| | |
|---|---|
| अहमेव वात इव प्र वा- | अहम् एव \| वातःइव \| प्र \| वामि । |
| म्यारभमाणा भुवनानि विश्वा । | आऽरभमाणा \| भुवनानि \| विश्वा ॥ |
| परो दिवा पर एना पृथि- | परः \| दिवा \| परः \| एना \| पृथिव्या । |
| व्यैतावती महिना सं बभूव ॥८॥ | एतावती \| महिना \| सम् \| बभूव ॥८॥ |

I myself (*aham eva*) blow forth (*pravami*) like the wind (*vā́tah iva*), grasping (*ārábhamāṇā*) all (*viśvā*) beings (*bhuvanāni*), beyond (*parah*) heaven (*divā́*), beyond (*parah*) this earth (*enā pṛthivyā́*), such (*etā vatī*) I have become (*sámbabhūva*) through my greatness (*mahinā́*)

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि प्रवर्ते वात इव। यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारान्तं परस्तादित्यर्थे वर्तते, यथाध इत्यधस्तादर्थे*। तद्योगे च तृतीया सर्वत्र दृश्यते। दिव आकाशस्य परस्तात्। एना पृथिव्या। 'द्वितीयाटौस्स्वेनः' [२।४।३४] इतीदम एनादेशः। अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात्† सर्वस्माद्विकारजातात्‡ परस्ताद्वर्तमानासङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती संबभूव। एतच्छब्देनोक्तं सर्वं परामृश्यते। [एतावती।] एतत् परिमाणमस्याः। 'यत्तदेतेभ्यः परिमाणे०' [५।२।३९] इति वतुप्। 'आ सर्वनाम्नः' [६।३।९१] इत्यात्वम्। सर्वजगदात्मनाहं सम्भूतास्मि। [महिना।] महच्छब्दादिमनिचि 'टेः' [६।४।१५५] इति टिलोप। तत तृतीयायाम्, उदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम्। छान्दसो मलोप ॥८॥

अथर्ववेदभाष्यम्। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कार्यरूपेणोत्पादयन्ती अहमेव अनन्यसहाया प्रवामि प्रवर्ते। वा गतिगन्धनयोः [धा० २।४०]। अदादित्वाच्छपो लुक्। तत्र दृष्टान्तः—वात इव। यथा वायुः परेणाप्रेरितः स्वेच्छयैव प्रवाति तद्वदित्यर्थः। उक्तं सार्वात्म्यं निगमयत्युत्तरार्धेन। परो दिवा। परः इति सकारान्तं परस्ता-

---

* The temptation is great to change अधस्तादर्थे into अधमादित्यर्थे but AVS. also shows अधस्तादर्थे

† सर्वात् is a misprint for सर्वस्मात् in M but has been copied all the same in certain printed editions

‡ पञ्चमी was expected acc to [illegible]. Cf सुभाषित हारि [illegible] Kādambarī "[illegible] [illegible]—"[illegible]" इति।'[2] [illegible] folio 70b.

दित्यर्थे वर्तते, यथा अध इत्यधस्तादर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिवा आकाशस्य परस्तात् एना पृथिव्या। 'द्वितीया टौस्स्वेनः' [२।४।३४] इतीदम एनादेशः। 'सुपां सुलुक्°' [७।१।३९] इति तृतीयाया आच् आदेशः। अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानम् उपलक्षणम्। एतदुपलक्षितात् सर्वस्माद् विकारजातात् परस्ताद् वर्तमाना असङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपा अहं महिम्ना माहात्म्येन एतावती सं बभूव एतत्परिमाणा उदीरितसकलजगदात्मना सम्भूतास्मि। एतच्छब्दाद् 'यत्तदेतेभ्यः°' [५।२।३९] इति वतुप्। 'आ सर्वनाम्नः' [६।३।९१] इत्यात्वम् ॥८॥

दीपिका। एवञ्च वायुरूपाहं वायुरिव निराबाधं निरङ्कुशं च वहमाना विश्वं समग्रं निर्मिमाणा उदग्रतमाया दिवः पृथुतमायाश्च पृथिव्याः प्रान्तान् ममतिक्रान्तवती। अत एव "वाग् वै त्वष्टा" इति श्रुतिः [ऐ° ब्रा° ६।४] मां त्वष्टेति व्यपदिशति। इत्थञ्चेयत्तयेयत्तया वा परिच्छेत्तुं न शक्यं मे महत्त्वम्। विस्तीर्णमर्णवनेमिर्वा सर्वतोविसारि गगनमण्डलं वा नैव प्रभवति मातुं मे माहात्म्यम्। यथाहि यथेच्छं सञ्चरतो वातस्य घोषा एव श्रूयन्ते, रूपं पुनर्न प्रत्यक्षीक्रियते, तथैव मम कार्यमिदं विश्वं सन्दृश्यते सर्वैः रूपं पुनर्मे प्रायेण न प्रत्यक्षीभावमुपयाति प्राकृतजनानाम्। नैवाहं चक्षुषा ग्राह्या न च शिष्टैरपीन्द्रियैः। मनसा तु प्रयत्नेन गृह्येऽहं सूक्ष्मदर्शिभिः॥ "यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥" [श्वेताश्व° ३।९] इति श्रुतिरपि मामेवोपवर्णयति। अतो मामेव शरणं गच्छ सर्वभावेन भारत। मत्प्रसादात् परां शान्तिं स्थानं गच्छसि शाश्वतम्॥८॥

इति काश्यप-श्रीशितिकण्ठ शर्म-विरचिता देवीसूक्त-दीपिका समाप्ता।

वात ११—*Cf.* वायुर्न पाथो vi. 4. 5. (said of Agni); अन्तरिक्षे पथिभिरीयमानो न निविशते कतमच्चनाहः going along his paths in the air he (Vāta) rests not for a single day, x. 168. 3; आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः। घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम "Breath

of the gods, germ of this world, this god fares according to his will. His sounds are heard, (but) his form is not (seen). To that Vāta we would pay worship with oblation" (MACDONELL)

परो दिवा, etc.—See p. 337. *Cf.* x. 85. 5 परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति. *Cf.* also *Raghu* vi. 77:.

आरूढमद्रीनुदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥

दिवा—AV. shows दिव.. *Similarly in the case of* परो देवेभिरसुरैर्यदस्ति RV. x. 82. 5, MS. ii. 10. 3 reads देवेभ्यः. "The prepositional adverbs परस्, अवस्, अर्वाक् govern either abl. or instr. without difference of meaning. This use of the abl. is apparently related to the abl. of comparison." BLOOMFIELD, *Variants* § 574.

परः—See pp. 58-59. "पर इत्येतत् सकारान्तमव्ययं वैदूर्येमाचष्टे । 'परो दिवा पर एना' इति यथा ।" S. under इन्द्र' को वीर्या परः i. 80. 15.

महिना—See p. 355.

एतावती महिना संबभूव—*cf.* एतावानस्य महिमा x. 90. 3. *Cf.* न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ i. 81. 5.

सम्बभूव—Veṅkaṭamādhava's remarks on the use of लङ्, लुङ् and लिट् are interesting. ननु भूतलकारेषु षड्भेदेषु गतक्रमः । परोक्षादिविभागोऽपि स्थितैरेव: केन पाणिनेः ॥ विहितेषु लकारेषु भूतमात्रे ततो वयम् । लङादयस्त्रयोऽपि लकारास्तथा तथा ॥ नैवं युक्तं रूपभेदादर्थभेदस्य युज्यते । पश्यामोऽपि च वाक्येषु भेदं पाणिनिदर्शितम् ॥ ... स्पष्टमेव लकारार्थान् पश्यामो ब्राह्मणेषु च । हरिश्चन्द्रो ह वैधसः ऐक्ष्वाकोऽपुत्र इत्युतम् । तस्माद् यथा तथा भूमि परोक्षायतनादिकम् । प्रदर्शयेत प्रयत्नेन सर्वमपि च पण्डितः ॥ स्पष्टः संवादसूक्तेषु परोक्षायतनादिकम् । तथान्येषु च सूक्तेषु न तं भेदं परित्यजेत् ॥ न पश्यति यदा सर्वं तं विशेषं प्रयत्नतः । अपि वैयाकरणिकं भवन्ति शब्दशास्त्रतः ॥ A comparison of this hymn with the other आध्यात्मिक hymns of RV. reveals its great delicacy in contrast with the bravado of those hymns. Compare for instance अहं राष्ट्राय रुद्राय धनुरातनोमि of this hymn with अहमस्मि महामहो ऽभिनभ्यमुदीषितः ।

अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥ अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् । अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥ अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक् । अहं वेशं नम्रमायवेऽकरमहं सव्याय षड्गृभिमरन्धयम् ॥ x. 49. 3-5.

A Paurānic देवीसूक्त is current in some parts of Bengal. We are indebted to Prof. Satyendra Nath Sen for the following stanzas of this hymn:

कात्यायनकुलोद्भूते सर्वदेवाशसम्भवे ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
महासुरौघनिर्णाशे महादेव-मनोहरे ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
सुरथाधिष्ठिते गौरि ब्रह्मादिसुरवन्दिते ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
चतुर्वर्गप्रदे देवि चतुर्वर्गात्मिके शुभे ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
माहेश्वरि महामाये महामोहविनाशिनि ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
राज्यसाम्राज्यशुभदे राजराजेश्वरप्रिये ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ।
कर्मशान्तिप्रदे सौम्ये जयदे भुवनत्रये ।
श्रीजय-श्रीजय-श्रीदे प्रसीद गिरिजे सति ॥
देवीसूक्तमिदं राजन् परापर-प्रबोधितम् ।
पठन् सप्तशती राजन् पठित्वा फलमाप्नुयात् ॥
देवीसूक्तमविज्ञाय पठेत् सप्तशतीं यदि ।
अभिचाराय भवति फलं नाप्नोति किञ्चन ॥
इति श्रीरुद्र-ब्रह्माण्डपुराणे दुर्गापासर-संवादे देवीसूक्तं समाप्तम् ॥

The prayer in the fifth chapter of the Caṇḍī beginning with नमो देव्यै महादेव्यै is also known as देवीसूक्त.

# शतपथब्राह्मणम्

Mādhyandina recension 1 8 1

*MANUMATSYA-KATHA*

*Introductory Note*

"One special interest in the story lies in the curious points of resemblance and contrast to other Deluge stories The warning of the Deluge by an animal, the fastening of the ship by a rope, the post diluvian sacrifice, and the miraculous reproduction of men, have all their analogies, but they are not found, as here, in combination, and the towing of the ship by a fish is quite unique The probability is, therefore, that this legend is of native growth

"Weber and to a less extent, Muir see in the story a tradition of an original immigration of the race from across the Himalayas They base their opinion on a rendering *over* the Northern Mountains Eggeling, however, renders 'up to' and some writers suppose the story to have originated in an exceptional overflowing of the Ganges The question is primarily one of textual criticism the choice lying between the reading *abhi dudrava* (Eggeling) and *ati dudrava* (Weber etc) The chief argument against an originally mythical origin of the story is that here also the tendency is become more and more mythical, and if we reverse this tendency we can easily explain the story as having grown out of an external inundation "

For the different versions of the story the student is referred to the article on Deluge in Hastings *Encyclopædia of Religion and Ethics*, Vol IV, from which the above extract has been taken as also to Muir's *Original Sanskrit Texts*, Vol I pp 181ff

For an account of the *Śatapatha Brahmana*, see Macdonell's *History of Sanskrit Literature* (pp 212 16) and *India's Past* (pp 48-49) and Weber's *Indian Literature*

## MANUMATSYAKATHĀ

### 1

मनवे ह वै प्रातः। अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवने-
जनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणीऽआपेदे* ॥१॥

To Manu in the morning they brought water for ablution, exactly as men bring it for washing the hands. As he was washing a fish came into his hands.

हरिस्वामिभाष्यम्। मनवे ह वै। इडाब्राह्मणमेतत्। तत्रेडायां मानवीमिडां[1] देवता वक्तुं 'मानवी घृतपदी मैत्रावरुणी' [आ॰ श्रौ॰ १।७।७] इत्येतानि च निगदपदानि व्याख्यातुमितिहासः प्रवृत्तः। स चेतिहासः प्रसन्न एव, किञ्चित्तु दर्शयाम। मनवे वैवस्वताय। तादर्थ्ये चतुर्थी[2]। अवनेज्यते हस्तादनेनेत्यवनेग्यम्। करणे कृत्यः। आजह्रुः आनीतवन्तः परिचारकाः। यथा इदम् अधुना पाणिभ्याम् हस्तार्थं[3] यदवनेजनं तस्मै आहरन्ति तथा आजह्रुः।

---

* The Kāṇva recension reads मनवे ह वा उदकमाजह्रुः प्रातरवनेग्यं, यथेदं पाणिभ्यामवनेजनायाहरन्ति। तस्य हावनेनिजानस्य मत्स्यः पाणिमापेदे।

1 The goddess Idā or Iḷā (the daughter of Manu or of man), thinking on and worshipping the gods, she is the wife of Budha and mother of Purūravas, in another aspect she is called Maitravaruṇī, as daughter of Mitra and Varuna (M W)

Idā is the sacrificial food "offered between the Pra-yāja and Anu yāja, and consisting of four preparations of milk, poured into a vessel containing water, and then partially drunk by the priest and sacrificers."

The name gave rise to the legend described here

2 क्रियायोगे चतुर्थी acc. to the Vārttika क्रियाग्रहणमपि कर्तव्यम् appears preferable

3 करणे तृतीया (पाणिभ्याम् [illegible]) is also possible

तस्य मनो [अवनेनिजानस्य] प्रक्षाल्यत मत्स्य पाणी [आपेदे] प्रास।
भाविनोऽर्थस्य सिद्धयर्थं देवतैव मत्स्यरूपेणाजगाम ॥

• In the *Satapatha Brahmana* the Udatta alone is marked with a horizontal stroke below e g प्रात = *pratah* मत्स्य = *matsyah* When there is a succession of two or more Udattas only the last is marked, e g मनवे ह वै प्रात = *Manave ha vai pratah* In the case of all independent Svaritas the preceding syllable is marked with the Udatta stroke, e g अवनेग्यम् = *avanegyam* For further details see Macdonell s *Vedic Grammar* p 80

In our text initial व is written as ब to show that it is गुरु except in the case of mono syllabic nipatas

एकाक्षरं वकारस्य निपातस्थो यदा भवेत् ।
संहितायां लघुज्ञात पदकाले गुरुर्भवेत् ॥
वकारस्त्रिविध प्रोक्तो गुरुर्लघुर्लघुतर ।
आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतर ॥
याज्ञवल्क्यशिक्षा १६ १०।

Hence ब्यर्थे but है व्वाच etc

Similarly anusvara before श ष स ह and र is pronounced something like ग्ँ and is written ॅ

अनुस्वारस्य ॅ इति वेदे च परे। इत्यादौर्यं दीर्घाःस, कथेष गुरव। शैत्री शिक्षा ३।
विष्गृह्म सर्वॅ वद् भूयाम ग्रस्यपति, प्रत ॅ हिमा म रामचौषेष।

मनवे—Dativus Commodi

अवनेग्यम्—formed with अनु from निज to wash preceded by अव See p 210 अवनेग्यम् is formed with अन्य वर्तं पवावेन्नम् ११. २ 8 13 righteousness (its) handwashing (१) इत्यर्थं यदवनेग्यं —इत्यम् इह इत्युदे दर्शनि। मर्त्य यन्मनवेनिजे—अविम् इह इत्यर्थ भवतानि —इत्यम् इह इत्युदे दर्शनि। हिवा ाहस दृष्टा चवनम्यवहे। १। पदपाठ यात्रा पूर्वसमयस्य यदवनेनिजे। हेवा प्रदृश दृष्टा अवनयवहे। १। भाव पात्रमैत्र यदन्तकाले भम्स इत्यं निर्दिष्टम् ii AB xl 4 दृष्टास्वनान्तम् इत्यम् यदवनेग्यम etc मारि अत्र स formed with अन्य the initial syllable being gunated are to

निज्ञं सवाधां गुण श्लौ P 7 4 25 According to western scholars however the form is the intensive present participle The present participle from the simple root which is अदादि आत्मनेपदिन is निजान Note that K reads अवनेज्य for अवनेग्य

आप्नक्र—the older form is आप्नम्

पारियाम्—This use of the Dat is analogous to that found in दृशये सूर्याय (see p 281) (see p 281) मरव इत्नवे (see p 383) etc an abstract substant ve taking the place of the infinitive V G S , p 315a

पाणी—K reads पाणिम् probably with a view to avoiding the hiatus जातावेकवचनम् *Cf* Gk *palame* Lat *palma* open hand

2

स हास्मै व्याचमुवाद। बिभृहि मा पारयिष्यामि* त्वेति† कस्मान्मा ‡पारयिष्यसीत्यौघ इमाः सर्व्वाः प्रजा निर्व्वौढा§ ततस्त्वा पारयितास्मीति ||कथ ते भृतिरिति ॥२॥

And he spoke unto him these words Maintain me I will deliver thee From what wilt thou deliver me? A flood shall sweep away all these creatures from that will I deliver thee ' How am I to maintain thee?

स' मत्स्य अस्मै मनवे वाचम् [उवाद] उदितवान्। कीदृशीम्? बिभृहि पुषाण' मा माम्। किमर्थम्? पारयिष्यामि पाल रक्षणे' [धा° १०।७५]

* पारयितासि वै त्वा K

† K adds स होवाच at the beginning of each speech

‡ पारयितासि K § निर्वोढ इति तस्मात् K

|| स होवाच—स कथं मार्गास्मीति K

* The B I ed reads पुष्णि which is probably to be attributed to the ignorance of scribes

† Evidently रक्षणार्थम् इति अन्वयस्य रक्षम् acc to the commentator As a matter of fact the root is the causal of पृ

रक्षिष्यामि त्वा इति। कस्मात् इति भयहेतुप्रश्नः। वहतीति ओघ. उदकसङ्घातः। स इमाः भारतवर्ष-निवासिनीः [सर्वाः] प्रजाः निर्वोढा निःशेषं वोढा देशान्तरं प्रापयिता। [तत ] तस्माद् भयहेतोः त्वा [पारयिता अस्मि] पालयितास्मि इति मत्स्यवचः। कथम् इति मनोः प्रश्न। कथं [ते] तव भृतिः भरणं पुष्टिः इति।

अर्थे—In the Vedas and Brahmanas अह्, ब्रू, वच, वद meaning to say (=announce, explain) are construed with the Dative of person V G S, p 310 c In classical Skt ब्रू and वद govern the acc of person

पारयिष्यामि—Note that K changes the two first futures into periphrastic futures for the sake of symmetry The periphrastic future expresses that something will take place at a definite time to come (e g. इतिथीं समा तदोघ आगन्ता) or that it will take place with certainty (e g, ओघ इमा सर्वा प्रजा निर्वोढा) As this was often accompanied by अ, it came to be known as श्वस्तनी V.G.S, pp 340 9

निर्वोढा—Periphrastic future (लुट्) of निर् वह् In class Skt निर् वह् is generally used in a metaphorical sense Note that the Kānva recension reads ऊड़ for ढ like the बह्वृच s

भृति—K uses the gerundive भार्य from which we have भार्या in class Skt in a specialised sense Cf the use of परिवार in the sense of 'wife' in modern Bengali Skt *bhrtih* Av *borsti*, Lat: *fors*, Goth *gabaurθs*, Arm *bard*

3

स होवाच। यावद्वै क्षुल्लका भवामो* बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां माऽग्रे बिभरासि स यदा तामतिवर्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्धा अथ मा समुद्रमभ्यवहरासि तर्हि वाऽअतिनाष्ट्रो भवितास्मीति ॥३॥

* K adds an इति here

He said, So long as we are small, we are liable to great danger Even fish devours fish Thou shalt keep me first in a jar When I outgrow that then thou shalt dig a trench and keep me in it When I outgrow that, thou shalt carry me away to the ocean Then I shall be beyond destruction '

क्षुल्लका. क्षुद्रका' अल्पका । नाष्ट्रा इति । गॄ निगरणे [धा° ६।१२९]। निगिरति । बिभरासि । अध्येषणायां 'लिङर्थे लेट्' [३।४।७]। बिभृयाः* पुष्णीयाः । एवमेव अभ्यवहरासि उपासासै आपद्यासै इति व्याख्येयानि । अतिवर्धै अतिरिच्य वर्धितास्मीति प्राप्ते 'लिङर्थे लेट्' [३।४।७] इति यदा-योगे लेट् । कर्षूः खातिका' । अतीतो नाष्ट्रान् नाशयितॄन् इति अतिनाष्ट्र ॥३॥

क्षुल्लका—the Prakrit form of क्षुद्रका. Just as भल्ल (Bengali भाल) is the Prakrit for Skt भद्र मल्ल for मद्र and अल्ल for आर्द्र Cf Bengali खुल्ल in words like खुल्लपितामह खुड्डक is another Prakrit form of क्षुद्रक and is found in the *Caraka Saṁhita* in the sense of 'small minor

नाष्ट्रा—fem like classical दंष्ट्रा and Ved अष्ट्रा (goad) formed from the causal of नश with the suffix ष्ट्रन् in the करणवाच्य नाष्ट्रा नाशकारिण्य AVS viii 3 7, नाष्ट्राभ्य आर्तिभ्य Uvata, नाशकर्तृभ्य पिशाचादिभ्य Mahidhara under VS xxxvii 12 इन्द्रा वै सर्वा मृध सर्वा नाष्ट्रा सर्वाणि रक्षांस्यभिचाचत् KS xxxvii 8

मत्स्य—In the *Nirukta* (vi 27) मत्स्य is derived thus मत्स्या मधौ (=) उदके स्यन्दन्ते, माद्यन्तेऽन्योन्य भक्षणायेति वा Skt *matsya*, Av *masya* (lit 'the wet' from **madcs* from *mad* to be wet) मत्स्या हीनरैतरभक्षणीयाभि Nir vi 27

उत—appears to be used here in the sense of यथापि According to Macdonell it means 'also ' "Even when preceding a substantive उत seems to refer to the whole statement उत मत्स्य एव मत्स्यान् गिलति it is also the case that one fish devours another " V G S, p 223 a

* The *Bibliotheca Indica* ed reads बिभिया which is on a par with पुष्णीयाः.

मत्स्य एव मत्स्य गिलति—this appears to be the origin of the मात्स्यन्याय of the Nitisastras *Cf Mahabhārata* दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः । जले मत्स्यानिवाभक्ष्यन् दुर्बलान् बलवत्तराः ॥ १२।१५।३० । Curiously enough the expression मात्स्यन्याय is often used with reference to Manu मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । कौटिल्य १।१३। ~

गिलति—K has the earlier form गिरति Panini also reads the root as गॄ and prescribes the optional change of र to ल by अचि विभाषा 8 2 21 RV shows forms with र only In classical Skt ल generally occurs when the root is used in the literal sense of 'swallowing' and र is found when it is used in a metaphorical sense The original root is *gwer, *gwor, which is found in Lat *vorare* 'to devour', *carni vor us* 'flesh eating', and Gk *obra'* food, *bi brō sko* 'I eat', etc

कुम्भ्याम्—कुम्भी is the fem of कुम्भ in a diminutive sense स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि । *Cf* घटी, कलशी, etc कुम्भीपाक originally meant the contents of a cooking vessel then a hell in which the wicked are baked like potter s vessels or cooked like the contents of a cooking vessel Av *xumba*, Mod Persian *xumb*, *xum* Gk *kumbos* 'cup', Irish *cum* 'vase'

बिभरासि—2 sing subjunctive present of भृ to bear The form expected is बिभरसि, बिभरासि appears to be due to the analogy of बिभराणि, etc Note that K changes the subjunctive into the imperative बिभृहि In B. the 2 pers subj is used only when the speaker makes a condition or gives a direction relating to the (not imme liate) future V G S, p 353 The subjunctive forms of भृ (भ्वादि) will be P. भराति or भरात्, भरतः, भरान् , भरासि or भरः, भराथ , भराथ , भराणि or भरा, भराव भराम , A भराते or भरातै, भरैते, भरान्ते , भरासै or भरासे, भरैथे, भराध्वै , भरै, भरावहै, भरामहै

पारयिष्यामि—1 sing. pres subjunctive Ātm of पृ in णिच्

कर्षपराणि—2 sing. pres. subj of पृ in णिच्

कर्षम्—from कृष् to plough. Av. *karšū* arable land, Skt कर्षति ploughs, Av *karšaiti*. The suffix is अ as in वपु dish, तनु body,

वधू bride etc कर्षू खाता occurs again in viii 8 3 10 where Hari-svāmin explains कर्षम् as गर्तम् 'furrow' or 'trench'

खाता—Alt form खनिता.

## 4

शश्वद्ध झष आस । स हि ज्येष्ठं वर्धते*ऽथेतिथीं† समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥४॥

Straightway he became a large fish; for he waxes to the utmost. He said, 'Now in such and such a year the flood will come, thou shalt therefore construct a ship and wait expectantly for me Thou shalt embark the ship when the flood rises and I shall ferry thee across '

शश्वच्छब्दोऽत्र सामर्थ्यात् क्षिप्रवचनः । झष. महामत्स्यः क्षिप्रमेव महामत्स्योऽत्रावर्ततेत्यर्थः । अथ कस्मात् स शीघ्रमेव महामत्स्यः संवृत्तः । हि यस्मात् सः ज्येष्ठं बृहत्तमं वर्धते । सर्वे एव हि जलचरा अतिशयेन वर्धन्ते, स तु मत्स्यत्वादनादृत्वाच्च बृहत्तमं वर्धत इति श्रुतिवचनम् । अथेतिथीम् इति मत्स्यवचनम् । अयमपि समुद्रम् अभ्यवहृते(?) । इतिथीम् इत्यभिनयः तेन संख्येयां समा दर्शितवान् । इयतीनां दशाना द्वादशाना वा पूरणी इतिथी । इदम इशादेशश्छान्दस, टित्वान् ङीप् । इयत्यस्तिथयो यस्या सा इतिथीति केचुचित् कोपेषु । तेष्वपि इयतिथीं यावतिथीं तावतिथीम् इति प्राप्ते छान्दसो यशब्दवशब्दलोपः । समा संवत्सरः तां समा समायामित्यर्थं । तत् स इति।

* स हीवाथेतिथीं, वै समामोघ आगन्तेति K

† Either स or इति should be dropped तदौघ cannot be regarded as a compd because both तत and औघ are accented K. drops this तत्

लिङ्व्यत्यय । स पूर्वोक्त श्रोघः आगन्ता तत् तदा नावम् उपकल्प्य [मा] माम् उपासासै उपासीथा । श्रोघे च उत्थिते तां नावम् त्वम् आपद्यासै आरोहेरित्यर्थः ॥

सद्यत्—See p 190 सद्यत् इ—at once, forthwith

झष—Etymology obscure (A G I 163) It is found in the Bengali expression झषमारि झकमार in Hindi means a fisherman (lit one who kills fish) As fish tastes as insipid as paper in places like Benares झषमारि means any idle and useless under taking In a similar way रोष becomes रोक् in Bengali In the Brahmanas *jasa-* means 'an aquatic animal' and *jhasa* 'a large fish ' See *Calcutta Oriental Journal*, Vol II, pp 97, 100

श्वास—one of the Vedic forms used by Kalidasa and others नावन्य उत्पाद्य स्वास यत्र, Ku 1 34

इतिथीम्, यतिथीम्, ततिथीम्—"The suffix थ forms a few ordinals from cardinals, and adjectives from pronominal stems with a general numerical sense " *Vedic Grammar*, p 139 इतिथीम्—so-manieth यतिथीम्—how manieth, ततिथीम्—so manieth

समाम्—originally 'summer' then, by synecdoche, year Skt परुत in this year Av *ham* summer, Arm *am* year *amarn* summer In the older language समा was declined in all numbers *Cf* Panini समां समां विजायते, 5 2 12 Temporal Acc for the Loc. *Cf* यां च रात्रीमजायेथा AB xxxix 1

श्रोघ—from आ वह् with the suffix घञ्. श्रोघ is from वह

उपासासै, आपद्यासै—The middle ending for the subjunctive 2 sing is से in RV In AV and the Brāhmanas, however, सै is used beside से

## 5

तमेवं* भृत्वा समुद्रमभ्यवजहार। स यतिथीं †तत्समां परिदिदेश ‡ततिथीं समां नावमुपकल्प्योपासांचक्रे स ओघ उत्थिते नावमापेदे

---

* तं तथा—K † K omits तत् ‡ तदं नावमुपकल्प्येति निवहद K

तꣳ स मत्स्य उपन्यापुप्लुवे *तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव† ॥५॥

Having reared it in this way he took it down to the sea. [And] in the very year which the fish had pointed out to him he prepared a ship and waited expectantly When the flood had risen he stepped into the ship The fish (then) swam up to him, (and) he tied the rope of the ship to its horn By that means he crossed over to the northern mountain

यावतीनां पूर्णां यतिथीम् परिदिदेश परिदिष्टवान् आख्यातवान् ततिथीं तावतीनां पूर्णां समाम् नावम् उपकल्प्य मत्स्यम् उपासितवान्। ओघे च उत्थिते नावम् अधिरूढः तं च मनु सः मत्स्य. उप समीपे [नि] नीचैः एनमुपकर्ष्यम् (?) इति सम्बन्धः। आपुप्लुवे आगतः। तस्य मत्स्यस्य शृङ्गे भवितव्यतयैव निष्पादिते नाव पाशं प्रतिबद्धवान्। तेन पाशेन सह मत्स्यः एतम् उत्तरं गिरिम् हिमवन्तम् [अतिदुद्राव] अधिजगाम ॥

उपासाञ्चक्रे—आस् 'to sit' with उप 'near' means to sit by expectantly, to sit waiting for In classical Skt it is used in the sense of to sit by (in sign of readiness to serve), *i e*, to serve, to worship

Since this perfect has been formed not directly but with the help of an auxiliary (by a 'periphrasis') it is known as the periphrastic perfect Only one instance of the periphrastic

---

* तस्य नाव पाश शृङ्गे प्रतिमुमोच K

† The Kanva recension reads अधिदुद्राव and Harisvamin's synonym अधिजगाम would appear to show that he also read अधिदुद्राव. But the stroke below the syllable containing अ clearly shows that that the correct reading is अति for the अ of अति is accented, whereas in the case of अधि it is the धि that is accented. निपाता आद्युदात्ता । उपसर्गाश्चाभिवर्जम् ।

perfect has been found in the metrical portion of the Saṁhitās[1]; hence Pāṇini, following the principle न वा एकमुदाहरणं योगारम्भं प्रयोजयति inserts the reservation अमन्त्रे in his rule कास्प्रत्ययादाममन्त्रे लिटि 3. 1. 35. The first element is the Acc. sing, of a fem. verbal noun in आ and is, as a rule, accented. Only a very few cases of the periphrastic perfect with अस् occurs in the older language, hence Pāṇini mentions only कृञ् in his rule कृञ्चानुप्रयुज्यते लिटि iii. 1. 40.

आपेदे—आ-पद् 'to step into', then esp. to step into trouble.

अभ्यवजहार—3 sing. perfect of अभि-अव-हृ. Older form *जभार. अव-हृ to carry down, अभ्यव-हृ to carry down completely. In classical Skt. the sense is that of carrying down the throat, *i. e.*, eating

उपन्यापुप्लुवे—3 sing perfect of प्लु 'to float' with उप (near), नि (down), आ (completely)—to swim near.

प्रतिमुमोच—fastened on, from मुच् 'to release' and प्रति 'in reversed direction, to, towards'.

पाशम्—from पश् to fasten. पशु is derived from this root.

6

स होवाचापीपरं वै त्वा *वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावद्यावदुदकꣳ समवायात्तावत्तावदन्वव-सर्पासीति† स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरव-सर्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥६॥

---

[1] मृत्युर्यमस्यासीद्दूतः प्रचेता असून् पितृभ्यो गमयाञ्चकार AV. xviii 2. 27 The commentator merely says —कास्प्रत्ययादित्याम्-प्रत्ययः कृञोऽनुप्रयोगश्च।

* अ मा बुभेत्थम वृक्षे नाव प्रबध्नीष्व मा तु त्वा...न्तश्छैत्सीन्मा त्वा विच्छासीत्। K.

† स ह मनुस्तथान्ववससर्प। तदाप्येतदौत्तरस्य गिरेर्मनोरवसर्पणमिति तदौघ इमाः सर्वाः प्रजा निरुवाहाथेदं मनुरेवैकः—K.

And he said, I have ferried thee across Bind the ship securely to a tree, but let not the water cut across thee while thou art on the mountain As the water subsides gradually thou shalt slide down And he slid down accordingly, and hence the slope of the northern mountain is called Manu's descent The flood swept away all those creatures and Manu alone remained here

स होवाच। मत्स्यवचनम्—अपीपरं वै त्वा पारितवानस्मि त्वाम् । अधुनाऽऽत्र वृक्षे नावं प्रतिबध्नीष्व। किञ्चापरम्—गिरौ सन्तं त्वा त्वाम् उदकम् मा अन्तश्छैत्सीत् तद्देशमध्यं भित्त्वा पृथगकार्षीत्, इदम् अस्माद्देशादित्यर्थः । कथ पुनस्तां नावं छिनत्ति? यावद् यावद् अध्वनः उदकं समवायात् एकीभावाय अव अध अयात् गच्छेत् अवतरेदित्यर्थः। तावत्तावत् त्वमपि तदेवोदकम् अनु अवसर्पासि अवतरे । स. मनुः प्राप्ते काले तावत् तावत् एव [अन्ववससर्प] अन्ववसृप्तः। येन च वर्त्मना मनुरवसृप्तः तद् अद्यत्वे अपि एतद् उत्तरस्य गिरेः मनोरवसर्पणम् इति आहुरिति शेषः। अवसृप्तोऽनेनेत्यवसर्पणम् ॥

अपीपरम्—1 sing red aor of the causal of पृ 'to pass

अन्तश्छैत्सीत्— 3 sing s aor injunctive of अन्तर् छिद् "अन्तश्छदन्त रिक्षेतानाचार्य शाकटायन । उपसर्गान् क्रियायोगान्मेने ते तु यथोऽधिका ॥ B D ii 95.

प्रतिबध्नीष्व—बन्ध् is उभयपदिन् in Vedic literature प्रति बन्ध् means 'to tie to, to fasten, in Ātm to fasten something of one's own. Then प्रति बन्ध् came to mean 'to exclude to cut off' as in प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रम: Raghu I 79.

समवायात्—3 sing subj of सम् अव इ lit 'go down together' The normal form समवायत् is found in K

अन्ववसर्पासि—2 sing subjunctive present of अनु अव सृप 'slide down gradually'

निरुवाह—निर् वह् means 'to carry off'

# ईशोपनिषत्

The *Isopanisad* forms the fortieth and last chapter of the *Vajasaneyi Samhitā*. Like the *Kenopanisad* it derives its name from the first word ईश. It is the shortest of the Upanisads containing as it does 18 stanzas only, even as the *Brhadaranyaka* is the longest. "It is about contemporaneous with the latest parts of the *Brhadāranyaka* is more developed in many points than the *Kathaka*, but seems to be older than the *Svetaśvatara*. Its leading motive is to contrast him who knows himself to be the same as the Ātman with him who does not possess true knowledge. It affords an excellent survey of the fundamental doctrines of the Vedanta philosophy." (MACDONELL, *A History of Sanskrit Literature*, p 238)

Otto Wecker made an exhaustive investigation into all the varying uses of the six oblique cases in the Upanisads and one important result of the investigation was the following conjectural chronological order and grouping of the principal Upanisads relative to the great grammarian Panini *viz* Group I, the earliest *Brhadaranyaka*, *Chandogya* and *Kausitaki*. Group II, also pre Paninean, *Aitareya*, *Tattiriya* and *Katha*, Group III posibly pre Paninean *Kena* and *Iśa*. Group IV post Paninean *Svetaśvatara* and *Maitrayani* (HUME *The Thirteen Principal Upanishads*)

'No knowledge without virtue' may possibly be the thesis propounded in the conclusion of the Kena Upanisad, yet it is the Iśā Upanisad that first deliberately teaches the samuccaya doctrine. The importance, however, of this precious little text for the history of Indian thought is still greater in that it is also the first gospel of that *karma yoga* which is often erroneously believed to have appeared with the Bhagavad Gita only." Schrader in *Indian Antiquary*, LXII 205

## 1

ॐ ईशा वास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम् ॥१॥

Enveloped by the Lord must be This All—each thing that moves on earth. With that renounced enjoy thyself. Covet not the wealth of any one.

शाङ्कर-भाष्यम् । ईशा वास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्ताः, तेषामकर्मशेषस्या[1]त्मनो याथात्म्यप्रकाशकत्वात् । याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम् । तच्च कर्मणा विरुध्येतेति युक्त एवैषां कर्मस्वविनियोगः । न ह्येवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्यमाप्यं संस्कार्यं[2] कर्तृभोक्तृरूपं वा येन कर्मशेषता स्यात् । सर्वासामुपनिषदामात्मयाथात्म्य निरूपणेनैवोपक्षयात्, गीतानां मोक्षधर्माणां चैवंपरत्वात् । तस्मादात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि[4] चोपादाय लोकबुद्धिसिद्धं, कर्माणि विहितानि । 'यो हि कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना च द्विजातिरहं न काणत्वकुब्जत्वाद्यनधिकारप्रयोजकधर्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्मसु' इति ह्यधिकारविदो वदन्ति । तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं स्वाभाविकमज्ञानं निवर्तयन्तः शोकमोहादिसंसारधर्म-

---

[1] अकर्मशेषस्य—अकर्माङ्गस्य । 'यः परस्योपकारे वर्तते स शेषः' Sabara on M. S. iii 1. 2

[2] किञ्च यः कर्मशेषः स उत्पाद्यो दृष्टो यथा पुरोडाशादि । विकार्यः सोमादिः । आप्यो मन्त्रादिः । संस्कार्यो व्रीह्यादिः । आनन्दगिरिः ।

[3] उपनिषदात्मयाथात्म्यविज्ञानवत् दृश्यत एव कर्मकाण्डाप्रामाण्यम् । यथा न हिंस्यात् सर्वा भूतानीति निषेधशास्त्रनिश्चयवत् दृश्यत एव श्येनादिविध्यप्रामाण्यम् । यथा च तीव्रक्रोधाक्रान्तस्वान्तं प्रत्येव श्येनादिविधिप्रामाण्यं तथा मिथ्यात्मदर्शिनं प्रत्येव कर्मविधिप्रामाण्यमित्यर्थः । आ°

[4] चाशुद्धत्वपापविद्धत्वादि—चाशुद्धत्वपापविद्धत्वादि—A., Mah

[5] काणकुब्जत्वादि—A., काणत्वकुब्जत्वादि V.

[1] विच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति। इत्येवमुक्ताभिधेयसम्बन्धप्रयोजनान्मन्त्रान् संक्षेपतो व्याख्यास्यामः।

ईशा वास्यमित्यादि। ईशा ईष्टे इतीट् तेन ईशा। ईशिता परमेश्वरः परमात्मा सर्वस्य। स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् प्रत्यगात्मतया, तेन स्वेन रूपेणात्मना ईशा वास्यम् आच्छादनीयम्। किम्? इदं सर्वं यत् किंच यत्किञ्चित् जगत्यां पृथिव्यां जगत् तत् सर्वं स्वेनात्मनेशेन प्रत्यगात्मतया 'अहमेवेदं सर्वम्' इति परमार्थसत्यरूपेणानृतमिदं सर्वं चराचरमाच्छादनीयं स्वेन परमात्मना। यथा चन्दनागुर्वादेरुदकादिसम्बन्धजक्लेदादिजमौपाधिकं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं जगत् द्वैतरूपं जगत्यां पृथिव्याम्। जगत्यामित्युपलक्षणार्थत्वात् सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसंन्यास एवाधिकारो न कर्मसु। तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः पुत्रो वा भृत्यो वात्मसम्बन्धिताया अभावादात्मानं पालयति, अतस्त्यागेनेत्ययमेव वेदार्थः। भुञ्जीथाः पालयेथाः। एवं त्यक्तैषणस्त्वं मा गृधः गृधिमाकाङ्क्षां[2] मा कार्षीर्धनविषयाम्। कस्यस्वित् धनं कस्यचित् परस्य स्वस्य वा धनं मा काङ्क्षीरित्यर्थः। स्विदित्यनर्थको निपातः। अथवा मा गृधः। कस्मात्? कस्यस्विद्धनम् इत्याक्षेपार्थः। न कस्यचिद्धनमस्ति यद् गृध्येत। आत्मैवेदं सर्वमितीश्वरभावनया सर्वं त्यक्तम्, अत आत्मन एवेदं सर्वम् आत्मैव च सर्वम्, अतो मिथ्याविषयां गृधिं[2] मा कार्षीरित्यर्थः ॥१॥

उपनिषद् is explained thus in the introduction to the Kaṭhopaniṣad-bhāṣya: [illegible]

[1] विच्छित्ति is used in Alaṁkāra-literature in a different sense.

[2] गृधि is not met with in classical Sanskrit. Probably the great Ācārya was thinking of [illegible] (quoted under the next stanza).

निषद्' इति। उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेन उपनिषच्छब्देन विद्योच्यत इत्युच्यते। ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्याम् 'उप'सद्य उपगम्य तन्निष्ठतया 'नि'श्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य 'विशरणात्' हिंसनाद् विनाशनात् इत्यर्थयोगेन विद्या 'उपनिषद्' इत्युच्यते। Similarly in the Mundakopanisadbhāsya we find ये इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तः, अविद्यादिसंसारकारणं चात्यन्तम् अवसादयति विनाशयति इत्युपनिषत्।

वास्यम्—Gerundive of the causal of वस आच्छादने [धा° २।१३]। "सर्वं जगत् परमात्मनि ओतं च प्रोतं च इति विभाव्यम्।' Or, 'आवास्यम्—to be inhabited by the Lord i e, to be looked at as the Lord's abode' Schrader

जगत्यां जगत्—Cf गच्छति जायते जगत्। महा° शान्ति° २०।१।

तेन त्यक्तेन—Instrumental Absolute तेन अनेन सर्वेण 'त्यक्तेन त्यक्तस्वामिसम्बन्धेन' Uvata It is because of the spirit of renunciation of the Brahmanas that Manu wrote सर्वं स्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीगतम्॥ आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ (I 100 101)

भुञ्जीथाः—पालयेथाः S आत्मानमिति शेषः save yourself संन्यासिनः शरीरसंधारणोपयुक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तोऽपि कथञ्चिद् द्रव्यपरिग्रहं दर्शयेत् प्राप्तिं तन्निरोधे यत्नः कार्यः। But भुज् is Atm in this sense So Uvata Mah and others explain भोगमनुभवेः

तेन त्यक्तेन भुञ्जीथाः—विरोधाभास By renouncing the world and all the enjoyments that it stands for we gain true enjoyment

गृधः—2 sing root aor injunctive of गृध् 'to be greedy' Cf • अक्षैर्मा दीव्यः p 325 For गृध see p 302

कस्यस्विद्धनम्—स्विद् imparts an indefinite sense to the interrogative in माता पुत्रस्य चरतः क्वस्वित् RV x 34 10 So we can translate 'Do not hanker after the wealth of any one' It is generally used with an interrogative pronoun or adverb which it emphasizes so we may also translate 'To whom, pray, doth wealth belong?' Cf the Bengali expression दुनियाटा कार which also admits of two constructions—दुनियाटा कार? and दुनिया टा कार For स्विद् see p 318

"Moral life is a God-centred life, a life of passionate love and enthusiasm for humanity, of seeking the infinite through the finite, and not a mere selfish adventure for small ends" RADHAKRISHNAN, *The Philosophy of the Upanishads*, p 88

## 2

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥

Only performing works here, one should desire to live a hundred years. While thus you (live) there is no way but this. Action cleaves not to man.

एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः। अथेतरस्यानात्मज्ञतयात्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः—कुर्वन्नेवेति। कुर्वन् एव निर्वर्तयन्नेव इह कर्माणि अग्निहोत्रादीनि जिजीविषेत् शतम् शतसंख्याकाः समाः संवत्सरान्। तावद्धि पुरुषस्य परमायुर्निरूपितम्[1]। तथा च प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि तत् कुर्वन्नेव कर्माणीत्येतद्विधीयते। एवम् एवंप्रकारेण त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मादग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात् प्रकारात् अन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते कर्मणा न लिप्यते इत्यर्थः। अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत्। कथं पुनरिदमवगम्यते—पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेति? उच्यते। ज्ञानकर्मणोर्विरोधं पर्वतवदकम्प्यं यथोक्तं[2] न स्मरसि किम्? इहाप्युक्तं यो हि जिजीविषेत् स कर्म कुर्वन्। 'ईशा वास्यमिदं सर्वं तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्' इति च। 'न जीविते मरणे वा गृधिं कुर्वीतारण्यमियात्' इति च पदम्। 'ततो न *पुनरेयात्' इति †संन्यासशासनात्। उभयोः फलभेदं च वक्ष्यति। 'इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः। क्रियापथश्चैव पुरस्तात्

---

[1] शतायुर्वै पुरुषः AB vii. 7.

* पुनरियात् all except V. † न्यासशासनात्—Anandabhatta

[2] *Cf.* Bhāṣya on BU. ii. 4. 1 सर्वक्रियाकारकफलोपमर्दस्वरूपायाश्च विद्यायाः सह कर्मणाविद्याया असुपपत्तिस्समुच्चयस्य विरोधश्चैनं विज्ञातः, व्यासवाक्यं च तेन श्रुतम्। कर्मविद्यास्वरूपयोः विद्याविद्यात्मकयोः प्रतिकूलवर्तनं विरोधः।

यदिदं वेदवचनं कुरु कर्म त्यजेति च।
कां गतिं विद्यया यान्ति कां च गच्छन्ति कर्मणा॥

संन्यासश्चोत्तरेण निवृत्तिमार्गेणैषणात्रयस्य त्यागः ।* तयोः संन्यासपथ एवातिरेचयति† । 'न्यास इवात्यरेचयत्' [तै° आ° १०।७८] इति च तैत्तिरीयके । 'द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभावितः‡ ॥' [महा शान्ति २४०।६] इत्यादि पुत्राय विचार्य निश्चितमुक्तं व्यासेन वेदाचार्येण भगवता । विभागं चानयोर्दर्शयिष्याम ॥२॥

'The Upaniṣads do not ask us to renounce life, do not taboo desires as such The essence of ethical life is not the sublation of the will The false asceticism which regards life as a dream and the world as an illusion is foreign to the prevailing tone of the Upaniṣads A healthy joy in the life of the world pervades the atmosphere To retire from the world is to despair of humanity and confess the discomfiture of God "Only performing works one should desire to live a hundred years" There is no call to forsake the world, but only to give up the dream of its separate reality We are asked to pierce behind the veil realise the presence of God in the world of nature and

एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे ।
एतावन्योन्यवैरूप्ये वर्तेते प्रतिकूलतः ॥ [महा° शान्ति° २४०।१ २]

इत्येव पृष्टस्य प्रतिवचनेन—

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ [महा° शान्ति° २४०।७]

इत्येवमादिविरोधः प्रदर्शितः ।

* V rightly omits उत्तरेण निवृत्तिमार्गेणैषणात्रयस्य त्यागः which explains संन्यास, and is probably a reader's note *Cf Gītābhāṣya* ii 21 तथा च पुराणे भगवान् व्यासः—द्वाविमावथ पन्थानावित्यादि. तदत्र क्रियापथः पुरस्तात् पश्चात् संन्यासश्चेति । Ānandabhaṭṭa also says क्रियापथः पुरस्तात् संन्यासपथः ।

† अतिरेचयति अत्यन्तमतिक्रामति । न्यासः संन्यास एव एव सर्वाणि अत्यरेचयत् अतिक्रान्तवान् ।

‡ Mah Mbh reads निवृत्तौ च सुभाषितः. Ānandāśrama MSS show निवृत्तौ च विभावितः, निवृत्तिश्च विभाषितः (V), निवृत्तौ चैव भाषितः and A reads निवृत्त विभावितः where निवृत्त evidently means निवृत्तिलक्षण.

society. We are to renounce the world in its immediacy, break with its outward appearance, but redeem it for God and make it express the divinity within us and within it. The Upaniṣad conception of the world is a direct challenge to the spiritual activity of man. A philosophy of resignation, an ascetic code of ethics, and a temper of languid world-weariness are an insult to the Creator of the universe, a sin against ourselves and the world which has a claim on us. The Upaniṣads believe in God, and so believe in the world as well." RADHAKRISHNAN, *The Philosophy of the Upanishads*, p. 95.

So long as we perform selfish work we are subject to the law of bondage, when we perform disinterested work we reach freedom. "While thus you live there is no way by which Karma clings to you." What binds us to the chain of birth and death is not action as such but selfish action. *Ibid.*, p. 121-22.

अस्ति—is detrimental to the metre and appears to have crept into the text from a gloss. Schrader (*Indian Antiquary*, Vol. LXII, p. 200) thinks otherwise.

न कर्म लिप्यते नरे—मुत्वर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते न सम्बध्यते। Mah. *Cf.* लिप्यते न स पापेन पद्मपत्रमिवाम्भसा. In English we generally speak of water gliding off the duck's back

मूलभूताविमौ मन्त्रौ। शिष्टमेतयोरेव व्याख्यानम्। शङ्करानन्दः।

## 3

असुर्या* नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥३॥

To the asuras belong those regions enveloped in blinding darkness. To them, departing from this world, go the men who kill the self.

* Some read असूर्याः.

अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते—असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः, तेषां च स्वभूता लोका असुर्या नाम। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्ते एषु* इति जन्मानि। अन्धेन अदर्शनात्मकेनाज्ञानेन तमसा आवृताः आच्छादिताः तान् स्थावरान्तान्, प्रेत्य त्यक्त्वा इमं देहम्, अभिगच्छन्ति "यथाकर्म यथाश्रुतम्"[1]। ये के चात्महनः। आत्मानं घ्नन्तीत्यात्महनः। के ते जनाः? येऽविद्वांसः। कथं त आत्मानं नित्यं हिंसन्ति? अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात्। विद्यमानस्यात्मनो यत् कार्यं फलमजरामरत्वादिसंवेदनलक्षणं तत् हतस्येव तिरोभूतं भवतीति प्राकृताविद्वांसो जना आत्महन उच्यन्ते। तेन ह्यात्महननदोषेण संसरन्ति ते ॥३॥

"This stanza is connected, by way of contrast, with stanza 6 (note the *tu*). The intervening two stanzas (4 and 5), with other metres, are consequently quotations and may have been interpolated by a later hand." Schrader.

असुर्या.—The word is derived from असुर with यत्. As असुर (Av. *ahura*) is used in the sense of the divine spirit in the oldest language, असुर्य generally means divine dominion in RV. From expressions like असुराः अदेवाः viii. 85. 9 असुर came to be regarded by popular etymology as a compd. of नञ् and सुर, thus giving rise to the word सुर which came to be used in the sense of God (*cf.* सिता). Then असुर्य came to mean the dominion of the demons, owned by the demons. Pānini's rule is असुरस्य स्वम् 4 4. 123. असुर्य is the opposite of दैव्य. *Cf.* TB. i 2.6.7 दैव्यो वै वर्णो ब्राह्मणः। असुर्यः शूद्रः।

अन्धेन—अन्ध is used as an adj. to तमः even in RV. *cf.* सो अन्धे चित् तमसि ज्योतिर्विदत् मरुत्वान् नो भवत्विन्द्र ऊती i. 100. 8. Let Indra accom-

* एषु omitted in all, but is absolutely essential. See विवृति.

[1] This is from Katha U. ii. 2. 7: योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥

pamed by the Maruts come to our help, finding light in the blinding darkness Yaska says in Nir v 1 तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति। न दर्शनम् अन्धन्तम इत्यभिभाषन्ते। (तमोऽप्यन्ध उच्यते। किं कारणम्? नास्मिन् ध्यानं दर्शनं कृतं भवति। किं कारणम्? चक्षुषो दृष्टिनिरोधात्। लौकिका अपि दर्शननिरोधे सति अन्धन्तम इत्यभिभाषन्ते। Durga)

प्रेत्य—is generally used in the sense of having gone over to the other world 'after death

ये के च—whoever cf यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम्। यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति॥

आत्महन—class आत्मघातिन The scope of Panini s rule ब्रह्मभ्रूण वृत्रेषु क्विप् 3 3 121 is restricted in various ways

Bhavabhuti alludes to this stanza in his *Uttaracarita* अन्धतामिस्रा ह्यसु(सू)र्या नाम ते लोकास्तेभ्य प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते (Act IV)

With this stanza may be compared *Gita* xiii 28 समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्। न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥

The idea of godhead is connected with light and the idea of the demons is naturally connected with darkness *blinding* darkness, because the demon s life is only a brief *blind* process in which no whence or whither is discerned because the demons are intellectually *blind*

This stanza inculcates the necessity of transcending our individuality and cultivating personality which is essentially universal

4

अनेजदेकं मनसो जवीयो
नैनद् देवा आप्नुवन् पूर्वमर्षत्।
तद्धावतोऽन्यानत्येति तिष्ठत्
तस्मिन्नपो मातरिश्वा दधाति॥४॥

Unmoving one swifter than mind—the gods failed to overtake it speeding on before them Standing still it outstrips

the others running. Herein doth Mātariśvan place the [primeval] waters.

यस्यात्मनो हननादविद्वांसः संसरन्ति *तद्विपर्ययेण विद्वांसो जना मुच्यन्ते†नात्महनः। तत् कीदृशमात्मतत्त्वमित्युच्यते—अनेजदिति। अनेजत् न एजत्। एजृ कम्पने [धा° १।२३१]। कम्पनं चलनं स्वावस्थाप्रच्युतिः तद्वर्जितं सर्वदैकरूपमित्यर्थः। 'तच्चैकं सर्वभूतेषु'। मनसः संकल्पादिलक्षणात् जवीयः जववत्तरम्। कथं विरुद्धमुच्यते—ध्रुवं निश्चलमिदं मनसो जवीय इति च? नैष दोषः, निरुपाध्युपाधिमत्त्वेनोपपत्तेः। तत्र निरुपाधिकेन स्वेन रूपेणोच्यते—अनेजदेकमिति। मनसोऽन्तःकरणस्य संकल्पविकल्पलक्षणस्योपाधेरनुवर्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरगमनं संकल्पेन क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम्। तस्मिन् मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्यावभासो गृह्यते, अतो मनसो जवीय इत्याह। ‡न एनत् देवाः द्योतनाद्देवाश्चक्षुरादीन्द्रियाणि, [एनत्] एतत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः। तेभ्यो मनो जवीयः, मनोव्यापारव्यवहितत्वादाभासमात्रमप्यात्मनो नैव देवानां विषयीभवति। यस्मा§ज्जवनान्मनसोऽपि पूर्वमर्षत् पूर्वमेव गतम्। व्योमवद्व्यापित्वात्। सर्वव्यापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सद् उपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीव अविवेकिनां मूढानामनेकमिव च प्रतिदेहं प्रत्यवभासत इत्येतदाह—तत् धावतः द्रुतं गच्छतः अन्यान् आत्मविलक्षणान् मनोवागिन्द्रियप्रभृतीन् अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति—तिष्ठत् इति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः सर्वप्राणभृत्क्रियात्मकः, यदाश्रयाणि कार्यकारणजातानि

* Should we drop the तत् ?

† V. मुच्यन्ते नात्महनः A.

‡ Either drop this न or read ग्राह—नैनद् वा यदि।

§ जवन reminds one of यथाविषादी जवनो यशोभ्य st. 10.

यस्मिन्नोतानि प्रोतानि च, यत्सूत्र[1]संज्ञकं सर्वस्य जगतो विधारयितृ[2] स मातरिश्वा । अप कर्माणि प्राणिनां चेष्टालक्षणानि । अग्न्यादित्यपर्जन्यादीनां ज्वलन-दहन-प्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः । धारयतीति वा । 'भीषास्माद्वात पवते' [तै॰ उ॰ २।८।१ ] इत्यादि-श्रुतिभ्य । सर्वा हि कार्य-कारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः ॥४॥

All sorts of contradictory statements are often made of the Ātman The absolute is not in space which is expressed by the assertion that it is infinitely large and infinitely small The absolute is not in time hence it appears as above the three times independent of the past and the future on the one hand it is of infinite duration but at the same time it is of the instantaneous character of the flash of the lightning or the swift rush of thought ' (KEITH p 522) Cf Kumara II 15

त्वमेव हव्य होता च भोज्य भोक्ता च शाश्वत ।
वेद्यश्च वेदिता चासि ध्याता ध्येयश्च यत् परम् ॥

अनेजत्—एज् by itself is generally Par in Vedic literature though उप एज् is used as Ātm In the Nighantu एजति is mentioned in the list of गतिकर्मक roots But एज् has become exclusively Ātm in classical Sanskrit

मनसो जवीय —The idea is common from RV downwards Cf यो वामश्विना मनसो जवीयान् RV i 117 2 यो मर्तस्य मनसो जवीयान् Ib i 118 1 यस्ते रथो मनसो जवीयान् x 112 2 मनसोऽप्याशुतर यद Kirat xiv 22 सह दूरतर तु चित्तत्त Ib xiv 27 * (Cf also COWPER How fleet is a glance of the mind !)

---

1 वायुर्वै गौतम तत् सूत्रम् । वायुना वै गौतम सूत्रेणाय च लोक परश्च लोक सर्वाणि च भूतानि सन्दृब्धानि भवन्ति । ' BU iii 7 2

2 ' एष सेतुर्विधरण एषां लोकानामसम्भेदाय । ' BU iv 4 22

* In several other passages also Bharavi uses Vedic imagery, thus यद दीर्घतमं तम प्रवेक्ष्यन् xiii 30 is reminiscent of दीर्घं तम आशयत् RV i 32 10 ज्योतिर्दीर्घं तम आशयिष्ट x 124 1 etc

अर्षत्—pres. part. neut. of ऋष् to flow, to run. Skt. ऋषभ, Av., O. P. aršan man, Gk. arsēn- male, etc., are all derived from this root. VS. reads अर्षत्.

तिष्ठत्—standing from स्था to stand. The original form of the root was *stā, Lat. stāre, Gk. histēmi (=तिष्ठामि).

धावतोऽन्यानत्येति तिष्ठत्—cf. आसीनो दूरं व्रजति शयानो याति सर्वतः Kaṭha U. i. 2. 21.

अपः—Acc. sing. of ápas (Lat. opus) work. The Acc. pl. of áp [Av. ap] water is accented on the second syllable acc. to ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः 6. 1. 171. As the word is accented on the second syllable in the *Vājasaneyi Saṁhitā* the meaning is waters.

Kūranārāyaṇa explains in his *Prakāśikā*: 'तस्मिन्' सर्वात्मन्यवस्थितः 'मातरिश्वा' वायुः। 'अपः' इत्युपलक्षणम्, पयोधरग्रहनक्षत्रतारकादिकं बिभर्तीत्यर्थः। सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुस्तत्सर्वमेव बिभर्तीत्यभिप्रायः। 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' [बृ° आ° ४।४।२२]। 'द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः। वासुदेवस्य वीर्येण विधृतानि महात्मनः॥' इत्यादिषु प्रसिद्धमेतत्।

मातरिश्वा—मातरिश्वा यदमिमीत मातरि RV. iii. 29. 11 अयं वै वायुर्मातरिश्वा योऽयं पवते SB. vi. 4. 3. 4; मातरिश्वा वायुः। मातर्यन्तरिक्षे श्वसिति। मातर्याश्वनितीति वा। Nir. vii. 26.

टु ओ श्वि मातरिपूर्वः। सप्तम्या अलुक्। Uj. on Uṇ. i. 158 (p. 387). 'He who grows in his mother,' accent after the analogy of *prātaritvan* (*Vedic Grammar* p. 75, f.n. 11). Acc. to some मातृ is also a name of wood in I.E. and मातरिश्वन् means 'the foetus of the wood' as fire is produced from fuel. See also JAOS. xxxii, p. 302.

5

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥

"It moves. It moves not. It is far and (उ) It is near. It is within all this, and (उ) It is outside of all this." (Hume)

'न मन्त्राणा जामिता' ऽस्ति' इति पूर्वमन्त्रोक्तमप्यर्थं पुनराह —तदेजतीति। तत् आत्मतत्त्वं यत् प्रकृतं तत् एजति चलति तत् एव च नैजति स्वतो नैव चलति स्वतोऽचलमेव सञ्चरतीवेत्यर्थः। किं च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव। तत् उ अन्तिक इति छेदः। तद्वन्तिके समीपेऽत्यन्तमेव, विदुषामात्मत्वात्*। न केवलं दूरे अन्तिके च तत् अन्त. अभ्यन्तरे अस्य सर्वस्य

---

[1] जामिता—पौनरुक्त्यम्। 'जात्यतिरेकनाम'—*Nir* iv 20 पुनरुक्तनामेत्यर्थं—Durga तद् यत् समान्यामृचि समानाभिव्याहारं भवति, तज्जामि भवतीत्येकम्—'मधुमन्तं मधुयुतम्' इति यथा। यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम्—'हिरण्यरूप स हिरण्यसन्दृक्' इति यथा। यथा कथा च विशेषोऽजामि भवतीत्यपरम्—'मण्डूका इवोदकान्मण्डूका उदकादिव' इति यथा। *Nir* x 16

Ānandagiri explains जामिता as आलस्यम् Ramacandra in his ईशावास्यरहस्यविवृति says the same thing जामितालस्यम्। रहस्यं मन्द्बुद्धि चित्ते नायातीत्यनलसा श्रुति सकरुणा मातेव पुन पुनरुपदिशति। Under AB xv 3 जामि वा एतद् यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यां समानेऽहन् यजतीति ('There is tediousness in the sacrifice when on the same day he uses the same verses as offering verses'—KEITH) S says जामि वै आलस्यमेव क्रियते सम्पाद्यते। प्रयुक्तयोरेवर्चो पुन प्रयोगस्य चर्वितचर्वणसदृशत्वात्। S is here following Sadguruśiṣya who says जामि अयज्ञा आलस्यम् Under TS i 5 9 7 ii 6 6 4 and vii 12 2 3 also S says आलस्यम् *Cf* also KS जामि नु तदा योऽस्य पूर्वोऽधिसमपरं करोति। xi 2 यदेन्द्रे द्वे सह कुर्याज्जामि स्यात्। न मन्त्राणां जामितास्ति—*Cf* Sabara on M S iv 2 13 न पुनरुक्तं मन्त्रम् दोष। बहुकृत्वोऽपि पाठ्य वेदितव्य भवति। *Cf* also *Nir* x 42 अभ्यासे भूयांसमर्थं मन्यन्ते

* Could the correct reading have been विद्वत्समाप्यत्वात् or विद्वत्सम् प्राप्यत्वात्? In the previous sentence Ācāryapāda says वर्षकोटिशतै रप्यविदुषामप्राप्यत्वाद् दूरे, it is therefore reasonable to suppose that we have the exact opposite to that statement here But in the first place we have nothing corresponding to वर्षकोटिशतैरपि here Secondly commentators who follow S have आत्मत्वात् Thus Mah says तद् दूरे अविदुषामनेककोट्यादप्राप्यत्वात् दूरे वर्तते। तत् उ तदेव अन्तिके समीपे। विदुषामात्मत्वेन भासमानत्वात्। Rāmacandra says यदा अन्तिकं समीपे। आत्मत्वेन तु समीप एव अज्ञानेन प्रत्यक्त्वात् वर्षकोटिभिरप्यप्राप्यत्वाद् दूर इव स्थितम्। आत्मनामितं तु समीप एव अज्ञानेन सुलभम्।

'य आत्मा सर्वान्तरः' [बृ° आ° ३।४।१] इति श्रुतेः। अस्य सर्वस्य* जगतो नामरूपक्रियात्मकस्य। तत् उ अपि सर्वस्यास्य बाह्यतः व्यापकत्वादाकाशवत्, निरतिशयसूक्ष्मत्वाद् अन्तः, 'प्रज्ञानघन एव' [बृ° उ° ४।५।१३] इति च शासनान्निरन्तरं च ॥५॥

*Cf* *Gītā* xiii 15 बहिरन्तश्च भूतानामचरं चरमेव च। सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥

तद्दूरे तद्वन्तिके—*Cf* ŚB x 5 2 17 अन्तिके च दूरे चेति ह ब्रूयात्। *Muṇḍaka*, iii 7 दूरात् सुदूरे तदिहान्तिके च।

अन्त —अन्तर generally governs the Loc , *e g* , कदा न्वन्तर्वरुणे भुवानि RV vii 86 2, सोऽयं पुरुषेऽन्तः प्रविष्ट BU v 9 1, अन्तरादित्ये CU i 6 6, etc For the use of the Gen with अन्त *cf* यदपूर्वं यक्षमन्तः प्रजानाम् VS xxxiv 2, अन्तश्चरसि भूतानां सर्वेषां किल मारुत Rām i 34 18, बहिरन्तश्च भूतानाम् *Gītā*, xiii 15

बाह्यत —बाह्य is generally used with the Abl बाह्यत though not directly coming under the rule षष्ठ्यतसर्थप्रत्ययेन is used with the Gen after the analogy of other words ending in तस् like दक्षिणत:, उत्तरत , etc

## 6

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते† ॥६॥

Now he who sees all creatures in the self and the self in all creatures, [nobody] shrinks away from him or, does not shrink away from Him (Self)

यः परिव्राड् मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि आत्मनि एव अनुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः। सर्वभूतेषु च तेष्वेव च

* जगतो नामरूपक्रियात्मकस्य could easily have been placed after अस्य सर्वस्य in the previous line अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य would therefore appear to have crept into the text from a gloss.

† VS (Mādhyandina recension) reads विचिकित्सति

श्चात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन। यथाऽस्य देहस्य कार्यकारण-सघातस्यात्माऽहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता[1] केवलो निर्गुण', अनेनैव स्वरूपेणा-व्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मानं निर्विशेषं यस्त्वनुपश्यति। स तत तस्मादेव दर्शनात् न विजुगुप्सते विजुगुप्सां घृणा न करोति। प्राप्तस्यैवानुवादोऽयम्। सर्वा हि घृणा आत्मनोऽन्यद्द दुष्टं पश्यतो भवति, आत्मानमेवात्यन्तविशुद्ध निरन्तर पश्यतो न घृणानिमित्तम् अर्थान्तरम् अस्तीति प्राप्तमेव—ततो न विजुगुप्सत इति ॥६॥

तद in तत' appears to be the correlative of यद but Indian commentators generally explain तत as तस्माद दर्शनात्.

In the next stanza तत्र refers to य, it stands to reason therefore that तत here should refer to य also In this stanza we are told that there is a gentleness and grace about the man of personality that draws all people towards him and nobody shrinks from him

Kuranarāyana explains यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्य। स उक्त विधज्ञानी। तत तेषु। सप्तम्यर्थे तसि। सर्वात्मकतया दृष्टेषु सर्वेषु भूतेष्विदर्थं। न विजुगुप्सते कुतश्चिदपि न बीभत्सते। स्वात्मविभूतिन्यायेन[2] क्वचिदपि निन्दां न करोतीति भाव।

Anantācārya says तत तस्माद दर्शनात् न विजुगुप्सते जुगुप्सां नाप्नोति "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" [अमर]। गुप् धातो "गुप्तिज्किद्भ्य सन्" [३।१।५] इति स्वार्थे सन् प्रत्यय। "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥" [गी° ६।३०] इति भगवद्वचनसमानार्थकमन्त्रोऽयम्।

7

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोह. क' शोक एकत्वमनुपश्यत' ॥७॥

---

1 Cf साक्षी चेता केवलो निर्गुणश्च (श्वेताश्वतर° ६।११)।

2 पाणिनि सर्वभूतस्थमात्मानं स्वात्मविभूतिन्यायेन निन्दां कस्यचित् निन्दा स्वनिन्देति भाव—इति श्रीधरादिभि पाठक आचारम्।

"In whom all beings have become just the Self of the discerner —then what delusion, what sorrow is there of him who perceives the unity!" (HUME)

इममेवार्थमन्योऽपि मन्त्र आह—यस्मिन् सर्वाणि भूतानि। यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनाद् आत्मैवाभूत् आत्मैव संवृत्तः परमार्थवस्तु विजानतः, तत्र तस्मिन् काले तत्रात्मनि वा को मोहः कः शोकः? शोकश्च मोहश्च कामकर्मबीजम् अजानतो भवति[1] न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः। को मोहः कः शोक इति शोकमोहयोरविद्याकार्ययोराक्षेपेणासम्भवप्रदर्शनात् सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥७॥

## 8

स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भू-
र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥

He has attained unto the bright, the bodiless, the scatheless, the sinewless, the pure, the un pierced of evil Wise, intelligent encompassing, self existent, he has distributed objects as propriety demands through the eternal years

योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेण किंलक्षण इत्याहायं मन्त्रः—स पर्यगादिति*। स यथोक्त आत्मा पर्यगात् परि समन्ताद् अगाद् गतवान् आकाश-

[1] निरतिशयानन्दस्वरूपम् अत एव दुःखास्पृष्टम् आत्मानम् अजानतः शोको भवति—'हा हतोऽहम्, न मे पुत्रोऽस्ति न मे धनम्' इति। ततः पुत्रादीन् कामयते, तदर्थं देवताराधनादीन् विधत्ते, न तु आत्मैकत्वं पश्यतः। The Acarya is thinking of BU 1 4 17 सोऽकामयत जाया मे स्यादथ प्रजायेय, वित्तं मे स्यादथ कर्म कुर्वीय।

* Printed editions read मन्त्र.। स पर्यगात् स यथोक्त आत्मा etc

वद्व्यापीत्यर्थः। शुक्रं शुद्धं ज्योतिष्मत्* दीप्तिमानित्यर्थः। अकायम् अशरीरं लिङ्गशरीरवर्जित इत्यर्थः। अव्रणम् अक्षतम्। अस्नाविरम् स्नावाः[1] शिरा यस्मिन्† न विद्यन्त इत्यस्नाविरम्। अव्रणमस्नाविरमित्येताभ्यां‡ स्थूलशरीरप्रतिषेधः। शुद्धं निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेधः। अपापविद्धं[2] धर्माधर्मादिपापवर्जितम्। शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि, 'स पर्यगात्' इत्युपक्रम्य 'कविर्मनीषी' इत्यादिना पुंलिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्वदृक्, 'नान्योऽतोऽस्ति द्रष्टा' [बृ आ° ३।७।२३] इत्यादिश्रुतेः। मनीषी मनस ईषिता सर्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्वेषां परि उपरि भवतीति परिभूः। स्वयम्भूः स्वयमेव भवतीति, येषामुपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयम्भूः§। स नित्यमुक्त ईश्वरो याथातथ्यत सर्वज्ञत्वाद् यथातथाभावो याथातथ्यं[3] तस्माद् यथाभूतकर्मफलसाधनतः अर्थान् कर्तव्यपदार्थान् व्यदधात् विहितवान् यथानुरूपं व्यभजदित्यर्थः। शाश्वतीभ्यः नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः ॥८॥

---

* With the exception of दीप्तिमान् and लिङ्गशरीरवर्जित the synonyms are all neuter So we should read ज्योतिष्मत् and लिङ्गशरीरवर्जितम् as Ānandabhatta actually does

[1] स्नावन् n , m is the more usual word acc to शब्दकल्पद्रुम, ज्ञानिष्ठो वनिप् Unādi iv 112 Sankarānanda says स्नावानि शिरा.

† यस्मिन् would appear to be the better reading

‡ °भ्याम्—all except V.

[2] Cf. Rāmacandra पुण्यमपि पुनरागतिहेतुत्वात् पापमेव, तेन अस्पृष्टम् [illegible] अविद्धम् असम्बद्धम्। स न साधुना कर्मणा भूयान्, नो एवासाधुना कनीयान् [बृ° आ° ४।४।२२] इति श्रुतेः, मादृशे कश्चित् धर्मः न चैव सुकृतं विभुः [गीता ५।१५] इति भगवद्वाक्यात्. Uvata and Mah explain प्रियकर्मविनाशकारित्वम्

§ So also Ānandabhatta and Mahidhara Rāmacandra reads स्वयम्भूः स्वयमेव भवति, न तु कारणान्तरमिदं। यद्वा ईश्वरत्वं सर्वोपरि सन् सर्वं स्वयमेव भवतीति सर्वस्य।

[3] Mahābhāṣya 7. 3 31

"One more quotation (but hardly interpolation) seems to be stanza 8, where the omission of one word (याथातथ्यत) and the reading व्यधात् (cf पर्यगात्) for the ill suited imperfect व्यदधात् would heal the metre though merely as to the number of syllables" Schrader

Commentators generally follow Sankaracarya and resort to लिङ्गव्यत्यय in the case of the neuters शुक्रम्, etc This would appear to be hardly necessary स can easily refer to the person spoken of in the previous stanzas and अकायमव्रणम् etc to ब्रह्म Cf सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। समपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥ Thus Uvata says य एवमात्मानम् उपास्ते स पर्यगात् परिगच्छति शुक्रं शुक्रं विज्ञानानन्दस्वभावम् इत्थम्भूतं ब्रह्म प्रतिपद्यते। अथास्योपासनायुक्तस्य फलमाह—यश्च कवि क्रान्तदर्शन etc Similarly the Prakasika says य सर्वभूतान्तरात्मब्रह्मदर्शी स पर्यगात् प्राप्नुयात् इत्यर्थः। ब्रह्मविदाप्नोति परम् [तै° उ° २।१।१] इति श्रवणात्। शुक्रम् अवदात स्वप्रकाशमित्यर्थः। सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थः। "न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा" इति हेयशरीरस्यैकान्तेन प्रतिषेधदर्शनात्। न तु दिव्यमङ्गलविग्रहरहितमित्यर्थः। "यत्ते रूपं कल्याणतमं तत्ते पश्यामि [ईशा १६] इत्यादौ नित्यप्रसिद्धस्याप्राकृतविग्रहस्य निषेधायोगात्। एवमहेयहेयप्रत्यनीकं परमात्मानं स विद्वान् पर्यगात् इति पूर्वेण सम्बन्ध। एवञ्च परमात्मा प्राप्य प्रापक उपास्यश्च यस्य स ब्रह्मविद् विशिनष्टि—कवि, etc

[1] Kathaka U v 8 which is evidently the source of our passage runs य एष सुप्तेषु जागर्ति कामं कामं [पुरुषो] निर्मिमाण तदेव शुक्रं तद्ब्रह्म etc Here we have the neuter noun ब्रह्म, here we have the masc corresponding with the neut (य तद), and here we have the correspondence with व्यधात् व्यदधात् I therefore regard याथातथ्यतोऽर्थान् as corrupted (through a gloss) from यथार्थान् because the omission of the relative pronoun is utterly improbable here and construe स कविरर्थान् व्यधात् (for व्यदधात्) (सन्) शुक्रम् अकायम् अपापविद्धं स आत्मवित् पर्यगात् i e, He has reached the bodiless Essence [or Light] which is also the Sage who has allotted

"Instead of the neuter we could of course have masculines by regarding शुक्रम् as an adjective and supplying तत् (or ईश्वरम् or

परमात्मानम्) instead of तत् But the series of epithets used here is of the kind found generally with the neut ब्रह्म or अक्षर only and the Upanisads distinguish between शुक्र which is a noun and शुक्ल which is an adj " Schrader, pp 206 7

अस्नाविरम्—The possessive suffix इर (र with the connecting vowel इ) has been added to स्नावन् This suffix is confined to Vedic literature and Kātyāyana has the Vārttika मेधारथाभ्यामिरन्निरचौ ५।२।१०९ to explain मेधिर and रथिर Its later form is इल which is found in जटिल, सिकतिल, पिच्छिल, etc This इल became इल्ल in Prakrit because of strong stress accent on the final syllable

कविर्मनीषी—"This is a clear distinction in Vedic thought between *kavi* the seer and *manisin* the thinker The former indicates the divine supra intellectual Knowledge which by direct vision and illumination sees the reality the principles and the forms of things in their true relations, the latter the labouring mentality which works from the divided consciousness through the possibilities of things downward to the actual manifestation in form and upward to their reality in the self existent Brahman " GHOSE

मनीषी—formed with possessive suffix इन् from मनीषा which is formed from मन् with the agent suffix ष and the connecting vowel ई *Cf* ऋजीष rushing, पुरीष rubbish

परिभू—See p 81 Note that परि has got nothing to do with उपरि even as पर has got nothing to do with उपर Because of the stress accent in Bengali उपरि often becomes परि just as अभ्याड् has become भाड and अतसी तिसी

शाश्वतीभ्य समाभ्य—Temporal Dative V G S, p 311, 3 *Cf* [illegible] MS. ii 1 2 for a year no allowance is made *Cf*. [illegible]—for the day forthwith, [illegible]—for the future, [illegible]—for the long night etc Rāmacandra says [illegible]
शाश्वतीभ्य समाभ्य इति तादर्थ्ये चतुर्थी। [illegible]।

## 9

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥९॥

BU. iv. 4 10

Into blinding darkness enter they who worship ignorance. Into darkness greater than that, as it were, they that find pleasure in knowledge

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता—प्रथमो वेदार्थः 'ईशा वास्यमिदं सर्वं मा गृधः कस्य स्विद्धनम्' [१] इति। अज्ञानां जिजीविषूणां ज्ञाननिष्ठाऽसम्भवे 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' [२] इति कर्मनिष्ठोक्ता—द्वितीयो वेदार्थः। अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यकेऽपि [१।४।१७] प्रदर्शितः—'सोऽकामयत - जाया मे स्यात्' इत्यादिनाऽज्ञस्य कामिनः कर्माणीति। 'मन एवास्यात्मा वाग् जाया' [१।४।१७] इत्यादिवचनादज्ञत्वं कामित्वं च कर्मनिष्ठस्य निश्चितमवगम्यते। तथा च तत्फलं सत्यासत्यः[1] तेष्वात्मभावेनात्मस्वरूपावस्थानम्। जायाद्येषणात्रयसंन्यासेन चात्मविदां कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' [बृ° आ° ४।४।२२] इत्यादिना। ये तु ज्ञाननिष्ठाः संन्यासिनस्तेभ्यः 'असुर्या नाम ते' इत्यादिनाऽविद्वन्निन्दाद्वारेणात्मनो याथात्म्यं 'स पर्यगात्' इत्येतदन्तैर्मन्त्रैरुपदिष्टम्। ते ह्यत्राधिकृता न कामिन इति। तथा च श्वेताश्वतराणां मन्त्रोपनिषदि 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' [६।२१] इत्यादि विभज्योक्तम्। ये तु कामिनः* कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते—'अन्धं तमः' इत्यादि। कथं पुनरेवमवगम्यते—न

---

[1] [illegible] BU. i. 5. 1 evidently refers to [illegible] and is to be justified acc. to Vāmana's dictum [illegible] (Kāvyālaṁkārasūtra v. 1. 11. See COJ, Vol I, No. 6.)

* [illegible]—All except V.

तु 'सर्वेषामिति ? उच्यते—अकामिनः साध्यसाधनभेदोपमर्देन 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥' [७] इति यदात्मैकत्वविज्ञानं तन्न केनचित् कर्मणा ज्ञानान्तरेण वा ह्यमूढः समुच्चिचीषति। इह तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते। तत्र च यस्य येन समुच्चयः सम्भवति न्यायतः शास्त्रतो वा तदिहोच्यते। तद्दैवं* वित्तं देवताविषयं ज्ञानं कर्मसम्बन्धित्वेनोपन्यस्तं न परमात्मज्ञानम्, 'विद्यया देवलोकः' [बृ° आ° १।५।१६] इति पृथक्फलश्रवणात्। तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया, न निन्दापरैव, एकैकस्य पृथक्फलश्रवणात्—'विद्यया तदारोहन्ति' [श° ब्रा° १०।५।४।१६], 'विद्यया देवलोकः', 'न तत्र दक्षिणा यन्ति' [श° ब्रा° १०।५।४।१६], 'कर्मणा पितृलोकः' [बृ° आ° १।५।१६] इति। न हि शास्त्रविहितं किञ्चिदकर्तव्यतामियात्। तत्र अन्धं तमः अदर्शनात्मकं तमः प्रविशन्ति। के ? ये अविद्यां विद्याया अन्याऽविद्या, † कर्मेत्यर्थः कर्मणो विद्याविरोधित्वात्[3]। तामविद्यामग्निहोत्रादिलक्षणामेव केवलाम् उपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः। ततः तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव ते तमः प्रविशन्ति। के ? कर्म हित्वा ये उ ये तु विद्यायाम् एव देवताज्ञान एव रताः अभिरताः[4] ॥९॥

प्रकाशिका। एवं विचित्रशक्तिक-परमात्मविषयां कर्मयोगाद्यङ्गिकां विद्यामुपदिश्यानन्तरं त्रिभिर्मन्त्रैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान् विनिन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह—अन्धमिति।

---

1 सर्वेभ्यः was expected because of तेभ्यः in the previous line

* यद्दैवम्—All except V

2 यद्धुर्मानुषं वित्तं गोव दैवतम् BU. 1. 4. 17

3 Acc. to the Kārikā तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञोऽर्थाः षट् प्रकीर्तिताः। विरोध also is one of the senses of नञ्. So we can easily say विद्याविरोधिनी अविद्या just as we say असुराः सुरविरोधिनः.

† तां कर्मेत्यर्थः—All except V.

4 विद्यायाम् अविद्यावस्तुप्रतिपादिकायां कर्मार्थायां मध्यामिव विद्यायां रता अभिरताः। विधिप्रतिषेधपर एव वेदो नान्योऽस्ती—[illegible]निवृत्तिपर: । BUS.

बृहदारण्यके [४।४।१०] चायं मन्त्रः पठितः। ये भोगैश्वर्यप्रसक्ता अविद्यां विद्यातोऽन्याम्, क्रियाम्, केवलं कर्मेत्यर्थः। विद्याविधुरं कर्मेति यावत्। .. उपासते अनुतिष्ठन्ति, अन्धं तमः अतिगाढं तमः, अज्ञानमित्यर्थः। लिङ्गाभिसङ्गाज्ज्ञानान्तरीयं नरकमन्धं तमो वा।

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति॥ [मुण्डक १।२।७]

इति श्रुतेः। य उ विद्यायां रताः। उकार उत्तरपदेनान्वेतव्यः। स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः। ते ततः कर्ममात्रनिष्ठाः प्राप्यादन्धतमसाद् भूय इव तमः तदधिकम् अज्ञानं प्रविशन्ति। इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति।

विद्या and अविद्या—As has been pointed out by many commentators the whole philosophy of the *Īśopaniṣad* is contained in the first two stanzas dealing with ज्ञान and कर्म. विद्या, therefore, can only mean knowledge proper or ज्ञान and अविद्या the reverse of knowledge, *i.e.*, कर्म. What our author wants to emphasize is that neither virtue (sacrifices, etc) alone nor knowledge alone is enough for the attainment of salvation, a harmonious combination of the two like the two wheels of a cart or the two wings of a dove can alone lead us to our goal. And mere knowledge without the performance of pious acts is the worse of the two, because the man possessed of such knowledge shirks his duty in this world (कर्मभूमि).

Our explanation has the support of the *Manusaṃhitā* which substitutes तपः for अविद्या in xii. 104:—

तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसा किल्बिषं हन्ति विद्ययामृतमश्नुते॥

which corresponds exactly with *Īśā* 11:

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥

By Avidya one may attain to a sort of fullness of power joy world knowledge, largeness of being which is that of the Titans or of the Gods of Indra of Prajapati This is gained in the path of self enlargement by an ample acceptance of the multiplicity in all its possibilities and a constant enrichment of the individual by all the materials that the universe can pour into him GHOSE

The usual senses of Vidya and Avidya are thus explained by Schrader

Kathaka Up speaks of *vidya* and *avidya* as widely different (दूरमेते विपरीते विषूची ii 4) and understands by *vidya* that wisdom (प्रज्ञान ii 24) i e *atmavidya* which cannot be gained by तर्क (ii 9) प्रवचन मेधा and बहुश्रुत (ii 23) and it calls अविद्या the ignorance of the sensualist (ii 4 वित्तमोहेन मूढा ii 6 the कामकामिन् of Bhag Gita ii 70) who prefers enjoyment to spiritual welfare (प्रेय to श्रेय ii 2) and the mock wisdom of philosophical materialism (ii 5 6) So also Maitr Up (vii 9) calls *avidya* or false learning the doctrine imparted to the Asuras by Brhaspati (Sukra) Mundaka Up understands by *avidya* (i 2 8 9) the *apara vidya* of the Karmakanda (i 1 4 5) speaks with contempt of the pious Vaidikas (i 2 1 10 source of Bhag Gita ii 42 ff ) and denies brahmaloka to be accessible through karman (नास्त्यकृत कृतेन i 2 12)—which seems to be the very attitude declined in Iśa Up 2 Vidyā appears in Mundaka Up as सम्यग्ज्ञान (iii 1 5) In Kena Up also *vidya* is आत्मविद्या (12) and this higher wisdom is expressly stated to be different from empirical knowledge (3 and 11)

## 10

अन्यदेवाहुर्विद्यया अन्यदेवाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥

Different (is the means for the attainment of salvation) from knowledge they say and different they say from ignorance This we have heard from the wise who revealed it to us

तत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चयकारणमाह—अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितैव[1] स्यादिति*—अन्यदेवेत्यादि। अन्यत् पृथग् एव विद्यया क्रियते फलम् इति आहुः वदन्ति। 'विद्यया देवलोकः' [बृ° आ° १।५।१६] 'विद्यया तदारोहन्ति'† [श° ब्रा° १०।५।४।१६] इति श्रुतेः। अन्यत् आहुः अविद्यया कर्मणा क्रियते 'कर्मणा पितृलोकः' [बृ° आ° १।५।१६] इति श्रुतेः। इति एवं शुश्रुम श्रुतवन्तो वयं धीराणाम् धीमतां वचनम्। ये आचार्या नः अस्मभ्यं तत् कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तः, तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥१०॥

प्रकाशिका। किं तर्हि मोक्षसाधनम् इत्यत्राह—अन्यदेवेति। विद्ययेति पञ्चम्यर्थे तृतीया, यथाश्रुतेऽन्यशब्दानन्वयात्, 'अन्यदेवाहुः सम्भवात्' [१३] इति वक्ष्यमाणानुरोधाच्च। तथा च विद्यायाः कर्मरहितविद्यातोऽन्यन्मोक्षसाधनमित्याहुः। उपनिषद इति शेषः। अविद्यया अविद्यायाः। ब्रह्मविद्याविधुरकर्मणोऽन्यदेव मोक्षसाधनमित्याहुः। पूर्वपूर्वसम्प्रदायसिद्धोऽयमर्थोऽस्माकम् इत्याह—इति शुश्रुमेति। ये पूर्वाचार्यास्ते प्रणिपातादिभिः सम्यगुपसन्नानाम् अस्माकं तन्मोक्षसाधनं विचचक्षिरे विविच्योपदिदिशुः। तेषां धीराणां धीमतां परमात्मध्यानपराणां वचनमित्यध्याहार्यम्। यद्वा धीराणामिति पञ्चम्यर्थे षष्ठी। तेभ्यो धीरेभ्य इति योज्यम्, नटस्य शृणोतीतिवत्[2]। इति शुश्रुम एवम्प्रकारम्

[1] फलवत्सन्निधावफलं तदङ्गम् Bhāṣya on M. S. iv. 4. 19 and B. S. ii. 1. 14.

* Ānandabhaṭṭa. °रङ्गाङ्गितया आमिलैव स्यात्—V. °रङ्गाङ्गितैव स्यादित्यर्थः—A.

† विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥

यत्र स्वरूपे कामाः सर्वे परागताः स्वयमकामनिवर्धः। तदात्मस्वरूपं विद्यया ज्ञानेन आरोहन्ति प्राप्नुवन्ति। अविद्वांसः पुरुषाः तत्स्वरूपं दक्षिणा। दक्षिणाभिः। न यन्ति न गच्छन्ति। तथा तपस्विनः अपि अविद्यामयेन न गच्छन्ति। तृतीयाया लुक्। Sāyaṇa.

[2] The analogy hardly holds good here, for in नटस्य शृणोति there is no उपयोग (Pā. 1. 4. 29) whereas in the case of listening to the discourse of wise men there is नियमपूर्वक विद्याग्रहण, the नियम consisting in प्रणिपात, परिप्रश्न and सेवा mentioned in Gītā iv. 34.

अश्रौषम् । ननु परोक्ष एवार्थे लिड्विधानात् 'शुश्रुमे'त्युत्तमपुरुषो न घटत इति चेत्, सत्यम् । ब्रह्मविद्याया दुरवगाहत्वेन निःक्षेपग्रहणमस्माभिर्न कृतमित्यभिप्रायकत्वादुत्तमपुरुषप्रयोगस्येत्याहु' ।

In the Kanva recension of VS this is the thirteenth stanza the tenth stanza reading सम्भवात् for विद्याया and असम्भवात् for अविद्याया The thirteenth stanza shows the normal Abl forms विद्याया and अविद्याया

विद्यया—Like इत्या भ्रय etc in class Skt विद्या is found in AV and TS only as the final member of the compound जातविद्या It gradually appeared as an independent word like इत्या in Bengali VS shows that the Instr stands for the Abl *Cf* Kena U 3 अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वषां ये नस्तद् व्याचचक्षिरे ॥

As Kuranarayana pertinently points out विद्यया and अविद्यया here correspond to सम्भवात् and असम्भवात् in st 13 and the Instr for the Abl is analogous to the Instr of comparison as in कोऽन्यो धन्यतरो मया so common in the epics and Puranas In Buddhist Sanskrit and Pali अन्यत्र governs the Instr

धीराणाम्—See p 42 धीरा विवक्तिन S under Mundaka ii 8 The Abl was expected acc to आख्यातोपयोगे 'धीराणां वाक्यमिति शेष । अथवा प्रसिद्धत्वाद् वाक्यमिति कर्मण्योऽप्रयोगे आख्यातोपयोगे इत्यपादानस्याविवक्षया शेषे षष्ठी । धीरेभ्य इत्यर्थ ।'' Ramacandra

न —Dat *Cf* तस्मै विचष्टे सवितासमर्यं x 14 3 पूर्वे पूर्वेभ्यो वच एतदूचु TB iii 12 9 2, V G S p 310 c

विचचक्षिरे—This is certainly the older form and is found in VS. Some read व्याचचक्षिरे which is found in *Kena U* 3 इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे, BU iii 4 1 य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व, etc , etc

## 11

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥११॥

He who knows both knowledge and ignorance together crosses death by ignorance and attains to immortality by knowledge.

यत एवम् अतो विद्या च अविद्या च देवताज्ञानं च कर्म चेत्यर्थं । यः तत् एतत् उभयं सह एकेन पुरुषेणानुष्ठेयं वेद तस्यैव समुच्चयकारिण

एवैकपुरुषार्थसम्बन्धः* क्रमेण स्यात् इत्युच्यते—अविद्यया कर्मणाग्निहोत्रादिना मृत्युम्, स्वाभाविक कर्म ज्ञानं च मृत्युशब्दवाच्यम्, तदुभय† तीर्त्वा अतिक्रम्य, विद्यया देवताज्ञानेन अमृतं देवतात्मभावम् अश्नुते प्राप्नोति। तद्ध्यमृतमुच्यते यद्देवतात्मगमनम् ॥११॥

Kūranarāyana refers to a stanza of the Viṣnu Purāna in this connexion Long long ago there were two kings—Khāndikya Janaka a follower of the कर्ममार्ग, and Keśidhvaja, a follower of the ज्ञानमार्ग. Khāndikya was attacked and defeated by Keśidhvaja and had to leave his kingdom and reside in the forest Then Keśidhvaja though resorting to the path of knowledge performed a large number of sacrifices with a view to crossing death by means of avidya (इयाज सोऽपि सुबहून् ज्ञानमार्गव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यय ॥ ) Once by a curious irony of fate he had to approach Khāndikya on a point of Prayaścitta, which was performed according to his advice When Keśidhvaja offered गुरुदक्षिणा to Khāndikya, he wanted true knowledge from him. Thus both became adepts in both margas and attained salvation

A very good edition of the *Iśopanisad* is that published with the *Prakāśikā* of Kuranārayana by the Oriental Book Agency, Poona The Ānandaśrama edition contains a number of valuable commentaries Hume's *Thirteen Principal Upanishads (Oxford University Press*, 2nd edition) is invaluable to students The advanced student may read with advantage Schrader's "Critical Study of Iśopaniṣad" (*Indian Antiquary*, 1933, pp 205 212) as also the section on the *Iśopaniṣad* (pp 168 174) in Belvalkar and Ranade's *History of Indian Philosophy*, Vol II

After the analogy of Kena, Kaṭha, etc, which end in *a*, our Upaniṣad is often called *Iśa*, even as in Bengali the Sundarakāṇḍa and Uttarakanda of the *Rāmāyana* are known as Sundarā Kāṇḍa and Uttarā Kāṇḍa after the analogy of Ayodhyā-kāṇḍa, Kiṣkindhyā kāṇḍa, etc.

---

* एवैकपुरुषार्थसम्बन्ध:—१.

† उभयम्—all except V.

# श्वेताश्वतरोपनिषत्

## तृतीयोऽध्यायः

### *Introductory Note*

"According to its own statement, the *Svetaśvatara Upanisad* derives its name from an individual author,* and the tradition which attributes it to one of the schools of the *Black Yajurveda* hardly seems to have a sufficient foundation Its confused arrangement, the irregularities and arbitrary changes of its metres, the number of interpolated quotations which it contains, make the assumption likely that the work in its present form is not the work of a single author In its present form it is certainly later than the *Kathaka* since it contains several passages which must be referred to that work, besides many stanzas borrowed from it with or without variation Its lateness is further indicated by the developed theory of Yoga which it contains, besides the more or less definite form in which it exhibits various Vedanta doctrines either unknown to or only foreshadowed in the earlier Upanisads Among those may be mentioned the destruction of the world by Brahma at the end of a cosmic age ( *kalpa* ) as well as its periodic renewal out of Brahma, and especially the explanation of the world as an illusion ( *maya* ) produced by Brahma At the same time the author shows a strange predilection for the personified forms of Brahma as Savitr, Iśana, or Rudra Though Siva has not yet

---

* तप प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्य परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ vi 21

become the name of Rudra, its frequent use as an adjective connected with the latter shows that it is in course of becoming fixed as the proper name of the highest god In this Upaniṣad we meet with a number of terms and fundamental notions of the Samkhya, though the point of view is thoroughly Vedantist; matter (*Prakrti*), for instance, being represented as an illusion produced by Brahma " MACDONELL, *A History of Sanskrit Literature*, pp 233 4

"It is somewhat hard to determine whether the present Upanishad obtained its name from the philosopher mentioned in it, namely, Śvetaśvatara, the philosopher of the white mule, to whom we are told, the Upanishad was revealed on account of the power of his penance and the grace of the Lord (vi 21), or whether the Upanishad came to be so called after the Śveta and the Aśvataras, two branches of the Carakaśakhā of the Black Yajurveda, to which the Upanishad has been customarily assigned The Vedic mantras quoted in the second chapter of the Upanishad and elsewhere do in any case preserve the readings and the sequence of the Yajurveda, which by itself is an argument for assigning the Upanishad to that Veda The Upanishad is an excellent illustration of the eclectic tendency of its author or authors it being in fact just a conglomeration of various original and borrowed ideas which makes it a very difficult task to critically evaluate the original contribution of the Svetasvatara to the Upanishadic philosophy' Belvalkar and Ranade, *History of Indian Philosophy*, Vol II, p 110

It is interesting to note that Kapila the founder of the Samkhya system is mentioned in the *Svetāśvataropaniṣat* It is still more interesting to note that the word अनेक is used in the plural in our Upanisad (य एकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति iv 1) as also in the *Yogasutra* of Patañjali (प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् iv 5) In all ancient works, in the writings of Panini, Katyayana and Patañjali, अनेक is used exclusively

in the singular The idea was that since in a तत्पुरुष compound the sense of the second member is prominent and since the second member here is एक and since एक is sing and a pronoun अनेक must also be regarded as singular and declined as a pronoun (K C CHATTERJI in the *Oriental Literary Digest* Vol IV nos 6-8 p 2)

"The notion that the material world is an illusion (*maya*), familiar in the later Vedanta philosophical system is first met with in the *Svetaśvatara* one of the later Upanishads though it is inherent even in the oldest This is virtually identical with the teaching of Kant that the things of experience are only phenomena of the thing in itself" *India's Past* p 47

The advanced student may read the whole of the Upanisad with the help of Hume's *Thirteen Principal Upanishads* and the commentaries in the Anandasram edition

1

ॐ य एको जालवानीशत ईशनीभि
सर्वांल्लोकानीशत ईशनीभिः ।
य एवैक उद्भवे सम्भवे च
य एतद्विदुरमृतास्ते भवन्ति ॥१॥

Who is one possessed of the net (maya or delusion) and rules all regions with his ruling powers who is all alone in his origin and manifestation—they who know this (or him) become immortal

[1] कथमद्वितीयस्य परमात्मन ईशितेशितव्यादिभाव इत्याशङ्क्याह—य एक इति। य एक परमात्मा स जालवान् जालं माया, दुरत्ययत्वात्। तथा

[1] This commentary is attributed to the great Sankaracarya but most scholars believe it to be the work of some inferior writer

चाह भगवान्—"मम माया दुरत्यया" [ गीता ७।१४ ] इति । *तद्वान्, तदस्तीति । जालवान् मायावीत्यर्थः । ईशत ईष्टे मायोपाधिः सन् । के ? ईशनीभि स्वशक्तिभि । तथा चोक्तम्—'ईशत ईशनीभिः परमशक्तिभि' इति । कान्? सर्वान् लोकानीशत ईशनीभिः । कदा । उद्भवे विभूतियोगे सम्भवे प्रादुर्भावे च । य एतद् विदुः अमृता. अमरणधर्माण [ति]भवन्ति ॥१॥

जालवान्—*jala* (originally **geiom*) from **ger* (Skt गृ) to twist, to wind and means a net, then a snare, magic, illusion, deception, *juta* comes from the same root जालवान् अविद्यामहेन्द्रजालवान् लताकीट इव लूतातन्तुजालवान् । प्रसार्याविद्यामहेन्द्रजालम् ईशते । (Sankarananda) एकैकं जाल बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देव v 3

लोकान्—In the earlier language the Gen is used in connexion with ईश् See pp 44 343 In vi 17 य ईशेऽस्य जगतो नित्यमेव the Gen is used in our Upanisad also

ईशत—3 sing subj of ईश 'to rule over', or आर्ष for ईष्टे बहुलं छन्दसि [२।४।७३] इति लुगभाव —Narāyana *Cf* i 10 क्षरात्मानावीशते देव एक

एक —'यद्यप्येकैव परमा शक्ति, अजामेकाम् [तै° आ° १०।१०१, श्वेताश्व° ४।५] इति श्रुते, एकैवाहं जगत्यत्र द्वितीया का ममापरा [सप्तशती १०।१३] इति स्मृतेश्च तथापि कार्यभेदाद्बहुत्वं द्रष्टव्यम् । एकोऽपि स्वशक्तिभि सर्वजगद्रूपो भवतीत्यर्थः ।" Nārayana.

एतत्—Narayana takes एतद् in the sense of एतद्ज्ञानम् Vivaranakara follows Sankaracarya य इति पूर्वेण पुलिङ्गनिर्देशात् सर्वनियन्तारं सर्वोत्पत्तिस्थितिलयकारणं अविलसर्वैकरसम् आत्मानम् *Cf* iv. 8 ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदु । यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

2

एको हि रुद्रो न द्वितीयाय तस्थु-
र्य इमांल्लोकानीशत ईशनीभि ।
प्रत्यङ् जनास्तिष्ठति संचुकोपान्तकाले
संसृज्य विश्वा भुवनानि गोपाः ॥२॥

a—TS i 8 6 1 (एक एव ... तस्थे), Ap. S S viii 17. 8, Siro U. 5. (एको रुद्रो न तस्थे तस्थे)

* तद्वान् is really superfluous

